सूक्ष्मं च ज्ञानं विपुलं विशुद्धं
निषेवमाणस्य इमं समाधिम्[1] ॥१२५॥
सुबुध्यते[2] नैष अयुक्तयोगै-
र्विवर्तनं[3] सर्वसु अक्षराणाम् ।
न शक्यु घोषेण विजाननाय
येनो अयं शान्तसमाधि न श्रुतः[4] ॥१२६॥
ज्ञातं तु[5] विज्ञैरयु बोधिसत्त्वै-
र्यथाव यं देशितु धर्मस्वामिना ।
[6]प्रतिबुद्धु शान्तेहि अनिन्दितेहि
इमं समाधिं प्रतिषेवमाणैः ॥१२७॥
आरब्धवीर्यैहि समुद्गृहीत-[7]
मुपस्थितं च सापि[8] सदा सुधारितम् ।
दुःखक्षयो जातिनिरोधज्ञान-
मिमं समाधिं प्रतिषेवमाणैः ॥१२८॥
सर्वैष धर्माणमजाति[9]भाषिता
एवं च[19] सर्वासु भवग्गतीषु ।

1 A & B ०णस्य समाधिमेतम्
2 C सुबुध्य नो ; A & B सुबुद्धते
3 A ०योगे विव०
4 C श्रुतम्
5 C ज्ञातस्थ
6 Tib. 62b, l. 4: རྟོགས །
7 A सु उद्गृहीत०
8 A & B ०स्थितं चापि ; Tib. 62b,l. 5: བརྟེན་བཀུར་དུས་ཤིང །
9 A ०णा अजाति ; B सर्वैष धर्मान संक्रान्ति
10 B drops च

ज्ञानाग्रु बुद्धान महाशयानां[1]
कश्चिज्जिनो भाषति तं समाधिम् ॥१२९॥
तस्यो कुमारस्यिमि[2] गाथ भाषतो[3]
अष्टाशीतिनियुतसहस्रपूर्णाः[4] ।
घोषानुगा क्षान्ति लभिंसु तत्र
अविवर्त्तिकाये[5] स्थितु बुद्धज्ञाने ॥१३०॥
[दृढबल]स्तमवदी[6] कुमार-
मद्यापि सो तिष्ठति लोकनाथः ।
पृच्छामि त्वं दारक एतमर्थं
कुतस्त्वया एष श्रुतः समाधिः ॥१३१॥
कुमारु राजन् अवदी[7] शृणोहि
दृष्टस्मि[8] कोटीनियुतं जिनानाम् ।
एकस्मि कल्पस्मि ते सर्वि सतकृता[9]
अयं च मे शान्तसमाधि पृच्छतः[10] ॥१३२॥
चत्वारि कल्पा नवतिं च अन्ये[11]
कल्पानकोटीनियुता[12] सहस्राः ।

1 B महाबलानां
2 A & B स्मिमि ; C °ष्यिम
3 A & B श्रुत्वा
4 B °नियुतशतसह°
5 C °र्तिका
6 A °र्मवचो ; B प्रलम्बमवती
7 A & B अवचो
8 B दृष्ट्स्मि ; C दृष्ट' मि
9 A मल्पास्मि ते च संस्कृता ; B °स्मि मिते च
10 A पृच्छित ; B पृच्छति
11 C °रतिं च अन्ये
12 C नयुता

जातिस्मरो भोम्यहु तत्र तत्र
　　न चापि गर्भे उपपद्यि[1] जातु ॥१३३॥

ततो[2] मया एष समाधि भावितः
　　शुद्धं श्रुतस्तेष[3] जिनान भाषताम्[4] ।

श्रुत्वा च उद्दिष्टु जनेत्व च्छन्दं
　　निष्कांक्ष आप्तेन स्पृशिष्यि[5] बोधिम् ॥१३४॥

ये भिक्षु मह्य[6] परिपृच्छदेन्ति[7]
　　पर्यापुणन्तस्य[8] इमं समाधिम् ।

उपस्थपेमी अहु तत्र गौरवं
　　यथैव लोकार्थकराण अन्तिके ॥१३५॥

येषां मया अन्तिक [9]एकगाथा
　　उद्दिष्ट[10] चर्यां चरतानुलोमिकीम्[11] ।

मन्यामि तानप्यहु शान्तु[12] एते
　　[13]उपस्थपेमी अहु बुद्धगौरवम् ॥१३६॥

यश्चापि मां पृच्छितु कश्चिदेति
　　पर्यापुणन्तं इमु सत्समाधिम्[14] ।

1 A उपपत्ति　　2 C न चो　　3 C ०स्तिम

4 B भाषता ; C भाषितम्　　5 B प्राक्केन स प्रशिष्यि ; C स्पृशीष्य

6 B ०सङ्घं　　7 C एन्ति

8 A ०न्तिस्य ; B पर्यापुनन्तिस्म ; Tib. 63a, l, 3 : ཡོངས་སུ་ཆུད་བགྱིད་པ །

9 A एव　　10 C उद्दिश　　11 C ०मिकी

12 C ०प्यहो शान्त　　13 A ०स्थायेमो ; C ०स्था

14 A सत्समा० ; B ०पुनत्त इमु संस०

स्वप्नान्तरेऽपीह न मेऽस्ति कांक्षा
　　नाहं भविष्ये[1] जिनु [लोकना]यकः ॥१३७॥
वृद्धेषु मध्येषु नवेषु भिक्षूषु
　　सगौरवो भोम्यहु सुप्रतीतः[2] ।
सगारवस्यो मम वर्धते यशः
　　पुण्यं च कीर्त्तिश्च गुणास्तथैव ॥१३८॥
कलीविवादेषु[3] न भो[मि उत्सुको
　　अल्पोत्सुको भोम्यहु तत्र] काले
अन्या गतिर्भोति करित्व पापकम्[4]
　　अन्या गतिर्भोति करित्व भद्रकम् ॥१३९॥
अयुक्तयोगानु[5] असंयताना-
　　ममनोज्ञ तेषां[6] वचनं श्रुणित्वा ।
कर्मस्वको[7] भो[म्यहु तस्मि काले
　　कृत]स्य कर्मस्य न विप्रणाशः ॥१४०॥
न ह्यत्र क्रोधो भवती परायणं
　　क्षान्ती बलं गृह्णयहु बुद्धवर्णितम् ।
क्षान्तिः सदा वर्णित नायकेहि
　　क्षान्तिं [निषेवित्व न बोधि दुर्लभा] ॥१४१॥

1 B ०हं न भेष्ये
2 B भोमवहु सप्रतीमः ; C ०शुः
3 B कालीम्बिवा० ; C कलिवि०
4 C पाप०
5 C ०योग' न
6 B ०तानां मनोज्ञ ; C ०तानां समनोज्ञ
7 C कर्मस्व कोटी ; cf. Pali : kammassako in *Majjhima*, III, p. 203.

अहं च भोमी सद शीलवन्तो
अन्यांश्च शीलस्मि प्रतिष्ठपेमि।
शीलस्य वर्णु सदहं भणामि
वर्णं च[1] भोती मम तत्र भाषितम् ॥१४२॥
अरण्यवर्ण[ञ्च[2] सदापि भाषे]
शीलस्मि चो भोमि सदा प्रतिष्ठितः।
समादपेमि[3] अहु अन्य पोषधे[4]
तांश्चैव बोधाय समादपेमि ॥१४३॥
तान्[5] ब्रह्मचर्येऽपि समादपेमि
अर्थस्मि धर्मस्मि प्रतिष्ठ[6][पेमि।
तेषाञ्च] बोधिम्यहु बोधिमार्गं
यस्मिन्निमे भोन्ति[7] अनन्तसङ्गाः[8] ॥१४४॥
स्मराम्यहं[9] कल्पमतीतमध्वनि
यदा जिनो आसि स्वराङ्गघोषः[10]।
प्रतिज्ञ तस्यो पुरतः कृता मे
क्षान्तीबलो भोम्यहु नित्यकालम्[11] ॥१४५॥

1 A ग्राहंश्च ; B ग्राह्यश्च ; Tib. 63b, l. 1 : བརྩོན་པར་གྱུར །=revered
2 A ०वर्णा च
3 B ०येमि
4 A नित्यपो० ; B नित्यपोषे
5 A तां
6 C प्रतिष्ठि
7 C होन्ति
8 Tib. 63b, l, 2 : གང་ལ་མཐའ་དང་ཆགས་པ་འདི་མེད་པ །
9 Mss, ०म्यहयं
10 See above p. 220.
11 A & B तस्मि काले

तत्र प्रतिज्ञाय प्रतिष्ठिहित्वा
वर्षाण कोटीचतुरो अशीतिम् ।
मारेणहं कुत्सित पंसितश्च
न चैव चित्तं मम जातु क्षुब्धम् ॥१४६॥
जिज्ञासनां[1] तत्र करित्व मारो
ज्ञात्वान मह्यं दृढक्षान्तिमैत्रीम् ।
प्रसन्नचित्तश्चरणानि वन्द्य मे
पञ्चशता[2] बोधिवराय प्रस्थिताः ॥१४७॥
अमत्सरी भोम्यहु नित्य[3]कालं
[त्यागस्य] चो वर्ण सदा प्रभाषे ।
आढ्यश्च भोमी धनवान् महात्मा
दुर्भिक्षकाले बहु भोमि दायकः ॥१४८॥
ये भिक्षु धारेन्ति इमं समाधिं
ये चापि वाचेन्ति य[4] उद्दिशन्ति ।
करोमि तेषां अहु[5] पारिचर्यां
सर्वे च[6] भेष्यन्ति नराणमुत्तमाः ॥१४९॥
कर्मणा[7] तेनाहमनुत्तरेण[8]
पश्यामि बुद्धान् बहु लोकनाथान् ।

1 B & C विज्ञा० 2 A मेषं पंचशता
3 A & C तस्मिं काले ; Tib. 63b, l. 4: དུས་དུ། 4 C या
5 A & C बहु ; Tib. བདག། 6 A & B सर्वेंति
7 A & B धर्मेण ; C स कर्मेणा
8 C हि भन्तरेण ; Tib. 63b, l. 6: བདག་ནི་བླ་མེད་པའི་ལས་དེ་ཡིས།

लभित्व प्रव्रज्य जिनानुशासने[1]

भवामि नित्यं विदु धर्मभाणकः ॥१५०॥

धूताभियुक्तो[2] अहु भोमि नित्यं

कान्तारमारण्य[3] सदा निषेवी।

नाहारहेतोः कुहनां करोमि

सन्तुष्टु[4] भोमी इतरेतरेण ॥१५१॥

अनीर्षुको भोम्यहु नित्यकालं

कुलेषु चाहं न भवामि निःश्रितः[5]।

कुलेषु सक्तस्य[6] हि इर्ष्य वर्धते

अनीर्ष्युकस्तुष्टि वनेषु[7] विन्दमि ॥१५२॥

मैत्रीविहारी अहु भोमि नित्य-

माक्रुष्टु सन्ता न जनेमि क्रोधम्[8]।

मैत्री विहारिष्यमि[9] सूरतस्य

चतुर्दिशं वर्धति वर्णमाला ॥१५३॥

अल्पेच्छु सन्तुष्टु भवामि[10] नित्य-

मारण्यकश्चैव धुताभियुक्तः[11]।

1 A & B जिनान शा० 2 A & B ध्ववाधिमुक्ती 3 A & B नित्यं आरण्य प्रारण्य ; C नित्य मृगुकरण्य ; Tib. 63b, l. 6 བས་མཐའ་དགོན་པ་ལ །

4 C सन्तुष्य 5 B चाहं न च भोमि निश्रितः ; C वाहान न भवामि निःश्रत

6 A शक्तस्य ; B स कस्य 7 A & B धवेषु

8 A & B जनेमि मैत्रीम् 9 A ०स्यिसि ; B स्थिमि सुरतस्य

10 B भवीमि 11 C ०धियुक्तः

न चोत्सृजामी[1] अहु पिण्डपातं
दृढं समाधान[2] धुतेषु विन्दमि ॥१५४॥
श्राद्धश्च भोमी मनसः प्रसादो[3]
बहुप्रसादः सद बुद्धशासने ।
प्रसादबहु लप्स्यमि[4] आनुशं[सा]
प्रासादिको भोमि अहीन-इन्द्रियः ॥१५५॥
यश्चैव[5] भाषांम्यहु तत्र तिष्ठे
प्रतिपत्तिसारो अहु नित्यु भोमि[6] ।
प्रतिपत्तिसारस्यिमि देवनागाः
कुर्वन्त्युपस्थानु प्रसन्नचित्ताः ॥१५६॥
गुणा इमे कीर्त्तित यावता मे[7]
एते च अन्ये च[8] बहू अनेके ।
ये शिक्षितव्याः सद पण्डितेन
यो इच्छती बुध्यितु[9] बुद्धबोधिम् ॥१५७॥
स्मराम्यतो बहुतरु दुष्कराणी[10]
ये पूर्वकल्पे चरितान्यनेके ।
बहुम्पि दानीं भणितुं न शक्यं
गच्छामि ता[वत् सु]गतस्य अन्तिकम् ॥१५८॥

1 A नैवोत्सृजामि 2 B समादान
3 A & B सद सप्रसादे 4 A प्रसादवलुहुस्यिमि ; B बुद्ध लप्सिमि
5 A यच्चैव ; B यच्चैव भावाम्बहु 6 A & B भोमि नित्यम्
7 A इमे यावत कीर्त्तिता मे ; B इमे वाचक कीर्त्तिता
8 B एता च अन्या च 9 A बुद्धितु 10 A दुष्कराणां

सुतीक्ष्णप्रज्ञो विदु बोधिसत्त्वो

तस्मिन् क्षणे स्पर्शयि पञ्चभिज्ञा[1] ।

ऋद्धीय सो गच्छि जिनस्य अन्तिके[2]

स [3]प्राणिकोटीभिरशीतिभिः सह[4] ॥१५९॥

दृढ[बलो परमु उदग्र[5]आसीत्

सार्धं तदा]कोटिशतेहि[6] षष्टिभिः ।

उपसंक्रमी मूलु[7] तथागतस्य

वन्दित्व पादौ पुरतो न्यषीदत् ॥१६०॥

अध्याशयं तस्य विदित्व राज्ञो

इमं समाधिं [द्विपदेन्द्र देशयी ।

श्रु]त्वा च सो पार्थिविमं समाधिम्

उज्झित्व राज्यं निरपेक्षु प्रव्रजी ॥१६१॥

स प्रव्रजित्वान इमं समाधिं[8]

भावेति वाचेति प्रकाशयेति[9] ।

स षष्टि[भिः कल्पसहस्रु प]श्चात्

पद्मोत्तरो[10] नाम जिनो अभूषि ॥१६२॥

1 A ०भिज्ञां ; B ०भिज्ञ'

2 A अन्तिकं ; B ऋद्धियस्य गच्छ जिनस्य अन्तिकं

3 A & B स प्राणको० ; C ब्राह्मणको० see Tib. 64a l. 5.

4 C सहाः

5 A परमसुदग्र

6 C कोटिशु पि

7 Tib. 64a, l. 5: དྲུང་དུ=अन्तिके

8 C इमे समाधि

9 A प्रकाशयानि ; C ०शतपति

10 B ०त्तमा

षष्टिस्तदा[1] कोटिशत अनूनका
ये राज्ञ[2] सार्धं उपसंक्रमी जिनान्[3] ।
[ते[4] चापि] श्रुत्वैव समाधिमेतं[5]
तुष्टा उदग्रा[स्तद प्रव्रजिंसुः] ॥१६३॥

ते [प्रव्रजित्वान] इमं समाधिं
धारेंसु वाचेंसु प्रकाशयिंसुः[6] ।
षष्टीन कल्पानि नयुतान[7]अत्यया
स्पृशींसु बोधिं वरमेककल्पे ॥१६४॥

अनन्तज्ञानो[8][त्तर] नामधेया[9]
अभूषि बुद्धा नरदेवपूजिताः[10] ।
तदेकमेके[11] द्विपदानमुत्तमो
मोचेति सत्त्वान्यथ गङ्गवालिकाः ॥१६५॥

शीरीबलो राजु अहं अभूषि[12]
इमां चरन्तो वरबोधिचारिकाम् ।

1 C षष्टिं तदा
2 A & B राज्ञि
3 A जिनम् ; B ०मि जि० ; C ०म जिनम्
4 A ये
5 C मिदं
6 A प्रकाशयीडसु ; C धनेड्सु वादेडसु प्रकाशयिंसु
7 A कल्पान युं०
8 C ज्ञानं
9 C ०धेये
10 A अभूत् सुबुद्धान नर०
11 A तत्रैवमेको ; B तत्रैकमेको
12 A & B शिरीबलो नाम अभूषि राजा see also p, 231.

ये ममु[1] पुत्राः शतपञ्च आसन्
इममेव[2] एते अनुधर्मपापाः[3] ॥१६६॥

एवं मया कल्पसहस्रकोट्यो
आरब्धवीर्येण अतन्द्रितेन ।
समाधि पर्यिष्ट [अयं विशुद्धः
समुदानयन्नेति तमग्रबोधिम्[4] ॥१६७॥

कुमार तस्माद्धि ये बोधिसत्त्वा]
आकांक्षते एतु समाधिमेषितुम्[5] ।
आरब्धवीर्यो निरपेक्षु जीविते
ममा कुमारा अनुशिक्षते[6] सदा ॥१६८॥

[इति श्रीसमाधिराजे बहुबुद्धनिर्हारसमाधिमुख-परिवर्तो
नाम सप्तदशः[7] ॥१७॥

1 B ये मह्यु
2 A & B ०न्निम एव
3 A & B & Tib. add जननी च या आसी बभूव मह्य'
या मायदेवी तहि तस्मि काले ।
चतुर्दशो कोटिसहस्रपूर्णा
ते धीतरो या मम सर्वि निर्वृताः ॥
दृढ्बलो नाम यदासि राजा
प्रभूत कोशो बलचक्रवर्ती ।
शुद्धोदनो राज स तस्मि काले
पिता अभुद यो मम तत्र तत्र ॥
4 A ममग्रबोधिम् ; Tib. 64b. བྱང་ཆུབ་མཆོག་འདི་ཡང་དག་སྒྲུབ་པ་ན །
5 A भावितुम् ; B ०ते एव तु समाधि भावितुम् ; Tib. སྒོམ་པར=भावितुम् ।
6 B मम कुमारा अनुशीक्षता
7 B बहुबुद्धनिर्हारसमाधिमुखपरिवर्तो नाम चतुर्दशमः

# अष्टादशपरिवर्तः

तत्र भगवांश्चन्द्रप्रभकुमारमामन्त्रयते[1] स्म। तस्मात् तर्हि कुमार यो बोधिसत्त्वो महासत्त्व इमं समाधिमुद्ग्रहीष्यति पर्यवाप्स्यति[2] धारयिष्यति[3] वाचयिष्यति प्रवर्तयिष्यति[4] उद्देक्ष्यति[5] स्वाध्यास्यति परेभ्यश्च विस्तरेण संप्रकाशयिष्यति [तेन] भावनायोगमनुयुक्तेन च भवितव्यम्। तस्यैतं प्रतिपद्यमानस्य[6] चत्वारो गुणानुशंसाः[7] प्रतिकाङ्क्षितव्याः। कतमे चत्वारः। यदुतानभिभूतो भविष्यति [8]पुण्यैरनवम[र्दनीयो भविष्यति प्रत्यर्थिकैः] अप्रमेयो भविष्यति ज्ञानेन अनन्त[श्च भवि]ष्यति प्र[ति]भानेन। यो हि कश्चित् कुमार बोधिसत्त्वो महासत्त्वः इमं समाधिमुद्ग्रहीष्यति पर्यवाप्स्यति धारयिष्यति वाचयिष्यति प्रवर्तयिष्यति[9] उद्देक्ष्यति स्वाध्यास्यति परेभ्यश्च विस्तरेण संप्रकाशयिष्यति तस्येमे चत्वारो गुणानुशंसाः प्रतिकाङ्क्षितव्याः। अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

अनाभिभूतः[10] पुण्येहि नित्यकालं भविष्यति।
समाधिं शान्तुभावेन[11] [सर्व]बुद्धान गोचरम् ॥१॥

1 A & B भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमा०
2 B omits it here, 3 A समाधिमाकाङ्क्षति धार०
4 A & B वाचयिष्यति पर्यवाप्स्यति प्रव० 5 B देशयिष्यति उप०
6 A & B drop भवनायोगमनुयुक्तेन च भवितव्यम्। तस्यैतं प्रतिपद्यमानस्य
7 A & B तस्य चत्वारो गुणाः 8 A पुण्यैरनवदर्शनीयो
9 A & B वाचयिष्यति पर्यवाप्स्यति प्रव० 10 A अनभि०
11 A शान्तं धारयित्वा; B शान्तं धारयित्वा=Tib. (Narthang edition), 105a, l. 4: ཏིང་ངེ་འཛིན་ཞི་བ་འདི་བཟུང་ན།

ये ममु[1] पुत्राः शतपञ्च आसन्

इममेव[2] एते अनुधर्मपापाः[3] ॥१६६॥

एवं मया कल्पसहस्रकोट्यो

आरब्धवीर्येण अतन्द्रितेन ।

समाधि पर्यैष्ट [अयं विशुद्धः

समुदानयन्नेति तमग्रबोधिम्[4] ॥१६७॥

कुमार तस्माद्धि ये बोधिसत्त्वा]

आकांक्षते एतु समाधिमेषितुम्[5] ।

आरब्धवीर्यो निरपेक्षु जीविते

ममा कुमारा अनुशिक्षते[6] सदा ॥१६८॥

[इति श्रीसमाधिराजे बहुबुद्धनिर्हारसमाधिमुख-परिवर्तो नाम सप्तदशः[7] ॥१७॥

1 B ये मह्यु    2 A & B ०न्निम एव

3 A & B & Tib. add जननी च या आसी बभूव मह्य
या मायदेवो तहि तस्मि काले ।
चतुर्दशो कोटिसहस्रपूर्णा
ते धीतरो या मम सर्वि निर्वृताः ॥
दृढ़ब्बलो नाम यदासि राजा
प्रभूत कोशो बलचक्रवर्ती ।
शुद्धोदनो राज स तस्मि काले
पिता अभुद यो मम तत्र तत्र ॥

4 A ममग्रबोधिम् ; Tib. 64b: བྱང་ཆུབ་མཆོག་འདི་ཡང་དག་སྒྲུབ་པ་ན །

5 A भावितुम् ; B ०ते एव तु समाधि भावितुम् ; Tib. སྒོམ་པར=भावितुम् ।

6 B मम कुमारा अनुशीक्षता

7 B बहुबुद्धनिर्हारसमाधिमुखपरिवर्तो नाम चतुर्दशमः

# अष्टादशपरिवर्तः

तत्र भगवांश्चन्द्रप्रभकुमारमामन्त्रयते[1] स्म । तस्मात् तर्हि कुमार यो बोधिसत्त्वो महासत्त्व इमं समाधिमुद्ग्रहीष्यति पर्यवाप्स्यति[2] धारयिष्यति[3] वाचयिष्यति प्रवर्तयिष्यति[4] उद्देक्ष्यति[5] स्वाध्यास्यति परेभ्यश्च विस्तरेण संप्रकाशयिष्यति [तेन] भावनायोगमनुयुक्तेन च भवितव्यम् । तस्यैतं प्रतिपद्यमानस्य[6] चत्वारो गुणानुशंसाः[7] प्रतिकाङ्क्षितव्याः । कतमे चत्वारः । यदुतानभिभूतो भविष्यति [8]पुण्यैरनवम[र्दनीयो भविष्यति प्रत्यर्थिकैः] अप्रमेयो भविष्यति ज्ञानेन अनन्त[श्च भवि]ष्यति प्र[ति]भानेन । यो हि कश्चित् कुमार बोधिसत्त्वो महासत्त्वः इमं समाधिमुद्ग्रहीष्यति पर्यवाप्स्यति धारयिष्यति वाचयिष्यति प्रवर्तयिष्यति[9] उद्देक्ष्यति स्वाध्यास्यति परेभ्यश्च विस्तरेण संप्रकाशयिष्यति तस्येमे चत्वारो गुणानुशंसाः प्रतिकाङ्क्षितव्याः । अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ।

अनाभिभूतः[10] पुण्येहि नित्यकालं भविष्यति ।
समाधिं शान्तुभावेन[11] [सर्व]बुद्धान गोचरम् ॥१॥

1 A & B भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमा०
2 B omits it here, 3 A समाधिमाकाङ्क्षति धार०
4 A & B वाचयिष्यति पर्यवाप्स्यति प्रव० 5 B देशयिष्यति उप०
6 A & B drop भवनायोगमनुयुक्तेन च भवितव्यम् । तस्यैतं प्रतिपद्यमानस्य
7 A & B तस्य चत्वारो गुणाः 8 A पुण्यैरनवदर्शनीयो
9 A & B वाचयिष्यति पर्यवाप्स्यति प्रव० 10 A अनभि०
11 A शान्तं धारयित्वा; B शान्तं धारयित्वा=Tib. (Narthang edition), 105a, l. 4: ཏིང་ངེ་འཛིན་ཞི་བ་འདི་བཟུང་ན །

पुण्येहि रक्षितः शूरो नित्यकालं भविष्यति ।
चरन् स परमां शुद्धां विशिष्टां बोधिचारिकाम्[1] ॥२॥
नास्य प्रत्यर्थिको जातु विहेठां कश्चित् करिष्यति ।
परिगृहीतो बुद्धेहि नित्यकालं भविष्यति ॥३॥
अप्रमेयश्च ज्ञानेन नित्यकालं भविष्यति ।
अनन्तः प्रतिभानेन धारेन्तः शान्तिमां गतिम्[2] ॥४॥
सततमनभिभूत पुण्यस्कन्धो[3]
भविष्यति श्रेष्ठतरं तु बोधिचर्याम्[4] ।
न भविष्यति प्रत्यर्थिकान घृष्यो[5]
इमु वरु शान्त समाधि धारयित्वा[6] ॥५॥
ज्ञानु विपुलु तस्य भोति तीक्ष्णं
तथ प्रतिभानमनन्त[7] चक्षु शुद्धं ।
भविष्यति सद तस्य पण्डितस्य
स्मृतिबलमेव च धारणीबलं च ॥६॥
परम प्रियु मनापु पण्डितानां
भविष्यति चार्थपदं प्रभाषमाणः ।

1 C ०भाविकां 2 A & C धारयन् शान्तमागतिम्
3 B सततमनभिभूतु पुण्य० ; A पञ्चस्कन्धो
4 A श्रेष्ठु चरन्तु बोधि०
5 B ०र्थिका घृष्या ; C दृष्टो ; Tib. 105a, l. 7: ཕས་ཀྱི་རྒོལ་བ་མེད་ཅིང་མི་ཚུགས་འགྱུར། 6 C देशयित्वा
7 A प्रतिभानु समन्त ; B प्रतिभानुम० ; C प्रणिधान०

ज्ञानु बहुजनस्य प्रज्ञवन्तो
इमु वरु शान्त समाधि भाषमाणः[1] ॥७॥
लाभि[2] परम श्रेष्ठ ची[वराणां
शय्य-निमं]त्रणमाद्यभोजनानाम्[3] ।
भविष्यति सुकुमार दर्शनीयो
इमु वरु शान्त समाधि धारयन्तो[4] ॥८॥
द्रक्ष्यति बहु बुद्ध लोकनाथान्
अतुलिय काहिति[5] पूज नायका[नाम् ।
न च भविष्यति तस्य] अन्तरायो
इमु वरु शान्त समाधिमेषतो हि ॥९॥
भाषिष्यति[6] पुरतः स्थित्व[7] लोकनाथान्
सुरुचिर गाथशते हि तुष्टचित्तः ।
न च भविष्यति तस्य जातु [हानी
इमु वरु शान्त समा]धि धारयित्वा ॥१०॥
स्थास्यति पुरतोऽस्य लोकनाथः
सुरुचिर-लक्षण-कायुव्यञ्जनेभिः ।
न च भविष्यति[8] तस्य ज्ञानहानी
इमु वरु शान्त समाधि धारयित्वा ॥११॥

1 C ०माणाः
2 A लाभी
3 B drops it.
4 A भावयित्वा
5 Tib. 105b, l. 4: འདྲེན་པ་དག་ལ་མཚུངས་མེད་མཆོད་པ་བྱེད།
6 Mss. भविष्यति ; Tib. བསྟོད།
7 B स्थिहित्वा
8 B न च व्यकाष्यति

[न कदाचि भविष्य]ति[1] दीनचित्तः
सतत भविष्यति आढ्यु नो दरिद्रः ।
न च भविष्यति उद्गृहीतचित्तो[2]
इमु वरु शान्त समाधि धारयित्वा ॥१२॥

न च[3] भविष्यति वा अक्षणेषु[4]
महीपति भेष्यति राजचक्रवर्ती[5] ।
सद भविष्यति राज्य तस्य क्षेमम्
इमु वरु शान्त समाधि धारयित्वा ॥१३॥

ज्ञानु विपुलु नात्र संशयोऽस्ति
क्षपयितु कल्पशतेहि भाषमाणैः ।
श्रुत[6] इमु समाधिशान्तभूमी
यथ उपदिष्ट तथा स्थिहेत धीरो[7] ॥१४॥

अपरिमित अनन्तकल्पकोट्यो
दशबल तस्य भणेयुरथानुशंसाम् ।
न च परिकीर्तिता कला[8] भवेय्या
यथ जलबिन्दु ग्रहीतु[9] सागरातो[10] ॥१५॥

1 B न भवति कदाचि
2 B उद्ग्रहीष्यति ते चित्तो  3 A नपि ; B न स
4 A & B सुलक्षणेषु ; Tib. 106a, l, 1-2 : མི་ཁོམ་པར་ཡང་གནས་པར་འགྱུར་རེ །  5 A ०वर्त्तिः
6 C श्रुत्वा ; B श्रुतश्च मे वरशान्तसमाधिभूमि
7 A & B स्थित हेत ; C वीरो ; Tib. བརྟན་པ །
8 A & B न च कलु परिकीर्त्तिता
9 C गृहीत्वा  10 B सागरान्तो

हर्षितु स कुमारु तस्मि काले
उत्थितु[1] प्राञ्जलिको नमस्यमानः[2] ।
दशबलभिमुखो स्थितो उदग्रो
गिरवराय[3] उदानुदानयाति ॥१६॥

अचिन्तियो महावीरो लोकनाथ प्रभाकरः[4] ।
यावच्चेमे[5] नरेन्द्रेण अनुशंसाः प्रकाशिताः ॥१७॥

आख्याहि मे महावीर हितैषी अनुकम्पकः ।
को नाम[6] पश्चिमे काले इदं सूत्रं श्रुणिष्यति ॥१८॥

तमेनमवदच्छास्ता[7] कलविङ्करुतस्वरः ।
असङ्गज्ञानी भगवानिमां वाचं प्रभाषते ॥१९॥

कुमार शृणु भाषिष्ये प्रतिपत्तिमनुत्तराम् ।
यो धर्माननुशिक्षन्तो[8] इदं सूत्रं श्रुणिष्यति ॥२०॥

पूजां कुर्वन् जिनेन्द्राणं बुद्धज्ञानगवेषकः ।
मैत्रचित्तं निषेवन्तो इदं सूत्रं श्रुणिष्यति ॥२१॥

धूतान् गुणांश्च संलेखान् गुणान्[9] श्रेष्ठान् निषेवतः ।
प्रतिपत्तौ स्थिहित्वा च इदं सूत्रं श्रुणिष्यति ॥२२॥

1 C उच्छ्रितु
2 A ०को जिनं नमस्य० ; B जिनोत्तमस्य मानः
3 C गिरप्रवराय
4 A प्रभङ्करः
5 B यावच्च मे
6 B को वा नाम
7 B तं मे वद स्थास्ता काले किङ्किनी०
8 B धर्ममनुशि०
9 A & B धुतगुणान् सुसंलेखां गुणान् ; Tib..106b, l. 3: ཡོ་བྱད་
བསྒྲུངས །

न पापकारिणां[1] हस्तादिदं सूत्रं श्रुणिष्यति ।
न यैर्विरागितं[2] शीलं लोकनाथानमन्तिके[3] ॥२३॥
ब्रह्मचारीण शूराणां येषां चित्तमलोलुपम्[4] ।
अधिष्ठितानां बुद्धेहि तेषां हस्ताच्छ्रुणिष्यति ॥२४॥
ये हि पुरिमका बुद्धा लोकनाथा उपस्थिताः ।
तेषां हस्तादिदं सूत्रं पश्चात्काले श्रुणिष्यति ॥२५॥
ये तु पूर्वासु जातीषु अभूवन्नन्यतीर्थिकाः ।
तेष्विमं श्रुत्व सूत्रान्तं सौमनस्यं न भेष्यति ॥२६॥
मम च[5] प्रव्रजित्वेह शासने जीविकार्थिकाः ।
लाभसत्काराभिभूता[6] अन्यमन्यं प्रतिक्षिपि ॥२७॥
अध्योषिता परस्त्रीषु बहुभिक्षु असंयता[7] ।
लाभकामाश्च दुःशीला इदं सूत्रं न श्रद्दधी ॥२८॥
पुण्यानुप्राप्ता[8] बुद्धेषु ध्यानप्राप्याप्यनर्थिकाः ।
निश्रिताश्चात्मसंज्ञायामिदं[9] सूत्रं न श्रद्दधे ॥२९॥
लौकिक ध्यानफलसंज्ञी[10] भेष्यते कालि पश्चिमे ।
अर्हत्पिण्डं च ते भुक्त्वा बुद्धबोधिं प्रतिक्षिपि ॥३०॥

1 B न पापकारिणो  2 C न येर्विना गीतं ; Tib. 106b, l. 4: ཚུལ་ཁྲིམས་བཤིག་པ །  3 A & B ०थान शासने

4 A ०मनालयम्  5 B ये मम  6 A ०रभीरूता

7 A परस्त्री च बहुभिषु असंयता ; B अव्योपिना परस्त्री पूर्वहु भित्तु असंयताः

8 C पुण्यान्यनुक्ता ; Tib. 107a, l. 1: སངས་རྒྱས་བརྙེས་པ་དེ་བསོད་ནམས་དང་ ། B बुद्धेहि ; A पुण्यानुप्राप्ता बुद्धेभि ध्यानप्राप्ताप्य०

9 B ०संज्ञाया इदं  10 C लौक्य ; A ०ध्यानेहबलसंज्ञी ; B लौकिकध्यानफलसंज्ञा भेष्यन्ति ; Tib. 107a l. 3: འབྲས་བུར་འཛིན །

यश्चैव[1] जम्बुद्वीपस्मि भिन्देयात् सर्व चतिया[2]।
यश्च प्रतिक्षिपेत् सूत्रमिदं पापं विशिष्यते ॥३१॥
यश्चर्हन्तो [नि]हतेय्या[3] यथा गङ्गाय वालुकाः ।
यश्च प्रतिक्षिपेत् सूत्रमिदं पापं विशिष्यते ॥३२॥
[क] उत्सहन्ति युष्माकं पश्चिमे कालि दारुणे ।
सद्धर्मलोपे वर्तन्ते[4] इदं सूत्रं [प्रकाशितुम्] ॥३३॥
रोदन्तो[5] उत्थितस्तत्र कुमारो जिनमब्रवीत् ।
सिंहनादं नदत्येवं पुत्रो बुद्धस्य औरसः[6] ॥३४॥
अहं निर्वृते[7] संबुद्धे पश्चिमे कालि दारुणे ।
सूत्रं वैस्तारिकं कुर्यां[8] त्यजित्वा [कायुजीवितम् ॥३५॥
सहि]ष्याम्यत्र[9] बालानामभूतां परिभाषणाम् ।
आक्रोशांस्तर्जनां चैव अधिवासिस्ये नायकः[10] ॥३६॥
क्षपेयं पापकं कर्म यन्मया पुरिमे कृतम् ।
अन्येषु बोधि[सत्त्वेषु व्यापादो जनितो] मया[11] ॥३७॥
स्थपेत्व[12] पाणि मूर्धस्मि बुद्धः काञ्चनसन्निभम् ।
शास्ता चन्द्रप्रभं प्राह मञ्जुघोषस्तथागतः ॥३८॥

1 A & B यथैव
2 A & B भिन्देय्या सर्वचेतियां
3 A याश्चार्हन्त घातेय्या ; B यश्चा हन्त घाटेया
4 B स धर्म नोपवर्तते ; C सद्धर्मविप्रलोपे वर्तन्तु
5 A & B रोदन्ते
6 B पुत्रा बुद्धस्य औरसाः
7 A अर्हन्निर्वृति ; B अर्हन्निवृत्ति
8 C कार्यें
9 C स्ये मन्त्रपा०
10 A अधिवाशिष्यि नायके ; B आक्रोशात्तर्जनाच्चैव अधिवासिस्य नायक
11 B जनितोऽपि वा
12 A & B स्थपित्वा

करोमि ते अधिष्ठानं कुमार[1] कालि पश्चिमे ।
न ब्रह्मचर्यान्तरा[यो जीवि]तस्य च भेष्यति ॥३९॥
अन्ये चाष्टौ शतान्यत्र उत्थिता धर्मधारका:[2] ।
वयं हि[3] पश्चिमे काले अस्य[4] सूत्रस्य धारका: ॥४०॥
देवनागान यक्षाण अशीतिकोट्यु पस्थिता[5] ।
अन्ये च नयुता:[6] षष्टि वदन्ते लोकनायकम्[7] ॥४१॥
वयमिमेषां भिक्षूणां य इमे अद्य उत्थिता: ।
तस्मिंश्च पश्चिमे काले रक्षां काहाम नायक: ॥४२॥
अस्मिन् सूत्रे प्रभाष्यन्ते[8] बुद्धक्षेत्रा: प्रकम्पिता: ।
यथा वालुक गङ्गाया अधिष्ठानेन शास्तुन: ॥४३॥
ये च प्रकम्पिता: क्षेत्रा: सर्वेषु बुद्धनिर्मिता: ।
प्रेषिता लोकनाथेन[9] ये हि धर्मा: प्रकाशिता: ॥४४॥
एकैकतश्च क्षेत्रात: सत्त्वकोट्यो अचिन्तिया:[10] ।
एवं[11] धर्मं तदा श्रुत्वा बुद्धज्ञाने प्रतिष्ठिता: ॥४५॥
इतश्च बुद्धक्षेत्रातो नवतिर्देवकोटिय:[12] ।
बोधिचित्तं समुत्पाद्य बुद्धं पुष्पैरवाकिरन् ॥४६॥

1 A कुमार
2 A & B ०भाणका:
3 B वयम्पि
4 B अत्र
5 A अशीति: को०
6 A & B नियुता:
7 तेस्मि' पश्चिमके काले रक्षं चा ; A नायक ; B रक्षाङ्क दासनायक
8 A प्रकाश्यन्ते ; B प्रकाशिते
9 A & B ०नाथेह्रि
10 B ०ठ्या ह्यविक्रिया:
11 A एतं
12 A & B नवति: सत्त्वकोटय:

ते व्याकृता नरेन्द्रेण कल्पकोटेरशीतिभिः[1] ।
सर्वेऽप्येकत्र कल्पेऽस्मिन्[2] भविष्यन्ति विनायकाः ॥४७॥
भिक्षुभिक्षुणिकाश्चैव[3] उपासक उपासिकाः ।
षट् सप्ततिः [4]प्राणकोट्यो येहि सूत्रमिदं श्रुतम् ॥४८॥
तेऽपि व्याकृत बुद्धेन द्रक्ष्यन्ते लोकनायकान्[5] ।
यथा वालुक गङ्गाया[6]श्चरन्तो बोधिचारिकाम्[7] ॥४९॥
सर्वेषां पूज काहिन्ति[8] बुद्धज्ञानगवेषकाः[9] ।
तत्र तत्र श्रुणिष्यन्ति इदं सूत्रं निरुत्तरम् ॥५०॥
अशीत्या कल्पकोटीभि भेष्यन्ते लोकनायकाः ।
सर्वे एकत्र कल्पेऽस्मि हितैषी अनुकम्पकाः[10] ॥५१॥
मैत्रेयस्य च[11] बुद्धस्य पूजां कृत्वा निरुत्तराम् ।
सद्धर्मश्रेष्ठं धारित्वा गमिष्यन्ति सुखावतीम् ॥५२॥
यत्रासौ विरजो बुद्धो अमितायुस्तथागतः[12] ।
तस्य पूजां करिष्यन्ति अग्रबोधीय कारणात् ॥५३॥
त्रिसप्ततिरसंख्येया कल्पा ये च अनागताः ।
न दुर्गतिं गमिष्यन्ति श्रुत्वेदं सूत्रमुत्तमम् ॥५४॥

1 B ॰कोट्यार॰ ; C ॰कोट्यैर॰ 2 B कल्पस्मि
3 B भिक्षवः भिक्षुणीका॰ 4 C प्राह॰
5 C ॰काः 6 A गङ्गायां
7 C ॰भाषितम् 8 C ॰काहेन्ति
9 C ॰काम् 10 A & B & Tib. 108a drop stanza 51.
11 A drops च ; B मैत्रेयो ह्यस्य 12 B अमिताभस्त॰

ये केचित् पश्चिमे काले श्रोष्यन्ते सूत्रमुत्तमम् ।
अश्रुपातं च काहिन्ति सर्वैस्तैः सत्कृतो ह्यहम्[1] ॥५५॥
आरोचयामि सर्वेषां यावन्तः पुरतः स्थिताः ।
परिन्दामि इमां बोधिं[2] या मे कृच्छ्रेण स्पर्शिता[3] ॥५६॥

इति श्रीसमाधिराजे[4] समाध्यनुपरिन्द[न]नाम-
परिवर्तोऽष्टादशः[5] ॥१८॥

1 Tib. 108b, l. 2: དེ་དག་ཀུན་གྱིས་ང་ལ་མཆོད །

2 B या विन्दामि इमा बोधि

3 Tib. 108b, l. 2: ངས་ནི་དཀའ་བས་ཐོབ་པ་ཡི ། བྱང་ཆུབ་འདི་ཡང་ཡོངས་སུ་གཏད ། 4 B drops इति श्रीसमाधिराजे

5 B समाध्यनुपरिन्दनापरिवर्तो नाम पञ्चदशमः । Cf इति सद्धर्मपुण्डरीके धर्मपर्याये-ऽनुपरीन्दनापरिवर्तो नाम सप्तविंशतिमः समाप्तः ।

# ऊनविंशपरिवर्तः

[1]तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता[2] अचिन्त्यबुद्धधर्मनिर्देशकुशलेन भवितव्यम्। अचिन्त्यबुद्धधर्मपरिपृच्छकजातिकेन भवितव्यम्[3]। अचिन्त्यबुद्धधर्माधिमुक्तिकेन[4] भवितव्यम्[5]। अचिन्त्यबुद्धधर्मपर्येषणाकुशलेन भवितव्यम्। अचिन्त्यांश्च[6] बुद्धधर्मान् श्रुत्वा नोत्त्रसितव्यं न सन्त्रसितव्यं न संत्रासमापत्तव्यम्। एवमुक्ते चन्द्रप्रभः कुमारभूतो[7] भगवन्तमेतदवोचत्। यथा कथं भगवन्[8] बोधिसत्त्वो महासत्त्वः अचिन्त्यबुद्धधर्मनिर्देशकुशलो भवति। अचिन्त्यबुद्धधर्मपरिपृच्छाकुशलश्च। अचिन्त्यबुद्धधर्माधिमुक्तश्च[9]। अचिन्त्यबुद्धधर्मपर्येषणाकुशलश्च भवति[10]। अचिन्त्यांश्च[11] बुद्धधर्मान् श्रुत्वा नोत्त्रस्यति न संत्रस्यति न सन्त्रासमापद्यते[12]। तेन खलु पुनः

1 This chapter has been edited by Prof. K. Régamey, Warsaw, 1938. A adds अथ खलु भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते ; B तत्र खलु.........ते स्म।

2 A महासत्त्वेनेमान् सर्वधर्मस्वभावसमताविपञ्चितायाः समाधेरचिन्त्यानप्रमेयान् गुणानुशंसनिर्हारपदान् श्रुत्वा नोत्त्रसितुकामेन न संत्रसितुकामेन न संत्रासमापत्तुकामेन अचिन्त्य० ; B महासत्त्वेनेमानि......मेयान् गुणानुशंसान् निर्हारपदान्......अचिन्त्य।

3. A & B omit this line.

4 A ०विमुक्तेन ; B ०विमुक्ति०

5 A & B add अचिन्त्यबुद्धधर्मपरिपृच्छाकुशलेन भवितव्यम्।

6 C अचिन्त्यान्

7 A & B येन भगवांस्तेनांजलिं प्रणम्य

8 A & B कथं पुनर्भगवान्

9 B ०विमुक्तश्च ; C अचिन्त्यांश्च बुद्धधर्मवियुक्तश्च

10 B भविष्यति

11 A drops च

12 A & B add एवमुक्ते भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्। यः कुमार बोधिसत्त्वो महासत्त्व इमं सर्वधर्मस्वभावसमताविपञ्चितं समाधिं श्रोष्यति श्रुत्वा चोद्ग्रहीष्यति

समयेन[1] पञ्चशिखो नाम गन्धर्वपुत्रः पञ्चभिस्तूर्यशतैः सार्धं [गगनतलादवतीर्य भगवतः [पुरतः स्थितोऽभूद्]पस्थानपरिचर्यायै। अथ खलु पञ्चशिखस्य गन्धर्वपुत्रस्यैतदभवत्[2]। यत्त्वहं[3] यथैव देवानां त्रयस्त्रिंशानां शक्रस्य च देवानामिन्द्रस्य सुधर्मायां [देव-

धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्तयिष्यति अरणाभावनया भावयिष्यति बहुलीकरिष्यति परेभ्यश्च विस्तरेण सम्प्रकाशयिष्यति स कुमार बोधिसत्त्वो महासत्त्वोऽचिन्त्यबुद्धधर्मनिर्देशकुशलो भविष्यति। अचिन्त्यबुद्धधर्माधिमुक्तश्च अचिन्त्यबुद्धधर्मपरिपृच्छाकुशलश्च अचिन्त्यबुद्धधर्मपर्येषणाकुशलश्च भविष्यति। अचिन्त्यांश्च बुद्धधर्मान् श्रुत्वा नोत्त्रसिष्यति न संत्रसिष्यति न संत्रासमापत्स्यते अस्मिन् खलु पुनः सर्वधर्मस्वभावसमताविपञ्चितात् समाधेरप्रमेयगुणानुशंसनिर्हारपदेषु भगवता चन्द्रप्रभस्य कुमारभूतस्य निर्दिश्यमानेषु। अथ खलु चन्द्रप्रभः कुमारभूतः इमानि सर्वधर्मस्वभावसमताविपञ्चितात् समाधेरप्रमेयगुणानुशंसनिर्हारपदान्यचिन्त्यानि भगवतः श्रुत्वा तस्मिन् समये चन्द्रप्रभः कुमारभूतः इमं सर्वधर्मसमताविपञ्चितसमाधिराजं प्रतिलब्धवान्। अप्रमेयासंख्येयाश्च बोधिसत्त्वा महासत्त्वाः महाभिज्ञानस्य लाभिनोऽभूवन्। अप्रमेयाणाञ्च सत्त्वानां महाकरुणावताराभिमुखानि चित्तान्युत्पन्नानि। अय च त्रिसहस्रमहासाहस्रो लोकधातुः षड्विकारकम्पितः प्रकम्पितः संप्रकम्पितः। चलितः प्रचलितः संप्रचलितः। वेधितः प्रवेधितः संप्रवेधितः। क्षुभितः प्रक्षुभितः संप्रक्षुभितः। रणितः प्ररणितः संप्ररणितः। गर्जितः प्रगर्जितः संप्रगर्जितः। पूर्वा दिगवनमति पश्चिमा दिगुन्नमति। पश्चिमा दिगवनमति पूर्वा दिगुन्नमति। उत्तरा दिगवनमति दक्षिणा दिगुन्नमति। दक्षिणा दिगवनमति उत्तरा दिगुन्नमति। अन्तादवनमति मध्यादुन्नमति। मध्यादवनमति अन्तादुन्नमति। अप्रमेयस्य चावभासस्य लोके प्रादुर्भावोऽभूत्। महच्च दिव्यगन्धवर्षमभिप्रावर्षत्। यावन्तश्च देवा देवपुत्राश्च सन्निपतिताः सन्निषण्णाश्च धर्मश्रवणाय ते उपर्यन्तरीक्षेऽभ्युपगम्येमान् सर्वधर्मस्वभावसमताविपञ्चितात् समाधेरप्रमेयान् गुणानुशंसनिर्हारपदान् श्रुत्वा ते सर्वदेवा देवपुत्राश्च तुष्टा उदग्रा आत्तमनस्काः प्रमुदिताः प्रीतिसौमनस्यजाता हाहाकार-किलिकिला-प्रक्ष्वेडित-निर्नादनिर्घोषाण्यकार्षुः। महान्तं च नानाविधं दिव्यं पुष्पवर्षमवसृजन्ति स्म। दिव्यानि चानेकानि तूर्यकोटीनियुतशतसहस्राणि पराहनन्ति स्म। एवं चैकोदाहारस्वरेण वाचो भाषन्ते स्म। अहो सुलब्धा अस्माकं लाभा यैरस्माभिरिमान्यप्रमेयगुणानुशंसनिर्हारपदानि भगवतोऽन्तिकात् श्रुतानि ते वयं भगवन् सर्वे सहिताः समग्रा यथार्थश्चन्द्रप्रभो बोधिसत्त्वो महासत्त्वः सर्वधर्मस्वभावसमताविपञ्चितस्य समाधेर्लाभी तथा वयमपि भगवन् सर्वे एवंविधस्यैव सर्वधर्मस्वभावसमताविपञ्चितस्य समाधेर्लाभिनो भवेम इति।

1 A & B add गृध्रकूटे पर्वते भगवतः सागरोपमायां पर्षदि धर्मं देशयतः

2 A ०दभूत् 3 B यदहं

सभाया]मुपस्थानपरिचर्यां करोमि। संगीतिं संप्रयोजयामि। तथैवाद्य देवातिदेवस्यापि[1] तथागतस्यार्हतः सम्यक् संबुद्धस्य पूजायै संगीतिं संप्रयोजयेयम्[2]।

अथ खलु पञ्चशिखो गन्धर्वपुत्रस्तैः पञ्चभिस्तूर्यशतैस्तैश्च पञ्चमात्रैर्गन्धर्वपुत्रशतैः सार्धमेकस्वरसंगीतिसंप्रयुक्ताभिस्तूर्यसंगीतिभिर्वैदूर्यदण्डां वीणामादाय[3] भगवतः पुरतो वादयामास। अथ खलु भगवत एतदभूद् यत्त्वहं[4] तथारूपमृद्धिभिः संस्कारमभिसंस्कुर्यां यथारूपेणर्द्ध्यभिसंस्कारेणाभिसंस्कृतेन चन्द्रप्रभः कुमारभूतोऽचिन्त्यबुद्धधर्मनिध्यप्तिकौशल्यमधिगच्छत् सर्वधर्मस्वभावसमताविपञ्चिताच्च समाधेर्न्न चलेत्[5]। पञ्चशिखस्य च[6] गन्धर्वपुत्रस्य तन्त्रीस्वरगीतिस्वर[7]कौशल्यमुपदिशेयम्[8]।

अथ खलु भगवांस्तथारूपमृद्ध्यभिसंस्कारमभिसंस्करोति[9] स्म[10] यत्तेभ्यः[11] पञ्चभ्यस्तूर्यशतेभ्यः संप्रयुक्तेभ्यः प्रवादितेभ्यो यथानुकम्पोपसंहृतः शब्दो निश्चरति धर्मप्रतिसंयुक्तः। इमाश्च बुद्धधर्मनिध्यप्तिगाथा निश्चरन्ति बुद्धानुभावेन[12]।

1 B॰देवाधिदे॰ 2 C ॰प्रयोत्तरतरा

3 A ॰स्तूर्यशतैः सार्धमेकस्वरसम्प्रयुक्तैर्वैदूर्यदण्डां वीणां स्वयमादाय ; B स्तूर्यशतैः सार्धमेकस्वरप्रयुक्तैस्तूर्यतन्त्रीवीणां स्वयंमादाय 4 B यदहं ; C यन्महं

5 C ॰धेन्न चलेत् ; B ॰ज्ञेलमधिगच्छेत सर्वधर्मस्वभावसमताविपञ्चिताच्च समाधेर्न चलेत

6 A & B drop च 7 A ॰गीतवच॰ 8 A & B मुपदिशयम्

9 A & Bo स्तथारूपमृद्ध्यभिसंस्कार॰ 10 A drops स्म 11 A & B यस्तेभ्यः

12 A ॰शतेभ्यः संप्रवादितेभ्यो यथाचिन्त्यार्थोपसंहितः शब्दो निश्चरति धर्मताप्रतिसंयुक्तः इमांश्चाचिन्त्यबुद्धधर्मनिध्यप्तिगाथा निश्चरन्ति स्म। बुद्धानु॰ ; B ॰शतेभ्यः सुसंप्रयुक्तेभ्यः सम्प्रवादितेभ्यो......चिन्त्योपसंहितः शब्दो निश्चरति धर्मताप्रतिसंयुक्ताः। इमाश्चाचिन्त्य-बुद्धधर्मनिध्यप्तिगाथा निश्चरन्ति स मे बुद्धानु॰

एकहि बालपथे[1] बहुबुद्धा
यात्तिक वालिक गङ्गनदीये ।
क्षेत्रं तात्तिक[2] तेष जिनानां
ते च विलक्षण ते[3] विसभागाः ॥१॥

पञ्चगतीगत [4]बालपथस्मिन्
नैरयिकापि च तिर्यगताश्च[5] ।
ते यमलौकिक देवमनुष्या
नापि च संकरु नो च उपीडो[6] ॥२॥

[तत्र पदे ससराः [7]ससमुद्राः
सर्वनदी तथ] उत्स-तडागाः ।
नोपि च[8] सङ्करु नो[9] च उपीडो
एवमचिन्तियु धर्मजिनानाम् ॥३॥

तत्र पदेपि च पर्वतऽनेके[10]
चक्रवाड अपि मेरु सुमेरु ।
ये[11] मुचिलिन्द महामुचिलिन्द
विन्ध्यथ[12] गृध्रकूटो हिमवांश्च ॥४॥

1 B एक हि वाल पथे ; Tib- ལྷ་གཅིག་ཁོན་པ ।

2 B क्षेत्रपि तात्तक ; C नदीं क्षेत्रे हि तात्तक

3 B drops ते

4 C बालु०

5 A ०का अपि तियगता च ; C तीर्यगता च

6 C नापि स संकरुनी न च उत्सतडाका । Tib. འདྲེས་པ་མེད་ཅིང ། གནོད་པར་འགྱུར་བའང་མེད ।

7 B तत्रपदेशसराः

8 C न

9 B नोपि च सकरुणो

10 A नेके ; B पर्व नेके

11 A येपि

12 B ०लिन्द्र महामुचिलिन्द्राः विन्ध्याथ

तत्र पदे निरयाश्च सुघोरा-
स्तपनप्रतापन आनभिरम्याः ।
तत्र च ये निरये उपपन्ना
वेदन ते पि दुखां अनुभोन्ति[1] ॥५॥
तत्र पदे पि च देवविमाना
द्वादशयोजन ते रमणीयाः ।
तेषु[2] बहू मरुतान सहस्रा
दिव्यरतीषु सुखान्यनुभोन्ति ॥६॥
तत्र पदे च बुद्धान उत्पादो[3]
शासनु लोकविदून ज्वलेति[4] ।
तं च[5] न पश्यति ज्ञानविहीनो
येन न[6] शोधित चर्य विशुद्धः ॥७॥
तत्र पदेपि च धर्म निरुद्धो
निर्वृतु नायकु श्रूयति शब्दः ।
तत्र पदेपि च केचि शृणोन्ती
तिष्ठति नायकु भाषति धर्मम् ॥८॥
तत्र पदेपि च केषचिद् आयु[7]-
र्वर्ष अचिन्तिय वर्तति संज्ञा ।

1 A ःखदुामनु० ; B दुःखमनु
2 A & B तेषु च
3 A तत्र च पदे बुद्धान उत्पादो ; B उत्पादो
4 B ज्वलानि
5 C drops च
6 A & B न
7 A & B ०चिदायु

तत्र पदेपि वा[1] कालु करोन्ति
नो चिरु जीवति श्रूयति[2] शब्दः ॥९॥
तत्र पदेपि च केषचि संज्ञा
दृष्टु तथागतु पूजितु बुद्धो ।
तोषितु मानसु संज्ञग्रहेण[3]
नोपि च पूजितु नो च उपन्नो ॥१०॥
स्वस्मि[4] गृहे सुपिनेव मनुष्यो
कामगुणेषु रतीरनुभूय[5] ।
स प्रतिबुद्धु न[6] पश्यति कामां-
स्तच्च प्रजानति सो सुपिनोति[7] ॥११॥
[यत्] तथ दृष्टु श्रुतमत ज्ञातं[8]
सर्वमिदं वितथं सुपिनो[9] वा ।
यस्तु भवेत समाधिय लाभी[10]
सो इमु जानति धर्मस्वभावान्[11] ॥१२॥
ससुखिताः सद ते नर लोके[12]
येष प्रियाप्रियु नास्ति[13] कहिंचित् ।

1 A & B च
2 C चिरूत्पमा पयुपति
3 B तोषि सुमानसु संज्ञाग्रहेणो
4 A & B स्वस्ति गृहेसुपि
5 A & B रतीमनु०
6 B & C स प्रतिबुद्ध न
7 A सोसुपिनेति ; B प्रजानयति सुपिनोति
8 A ०तं मत ; B ०तं मद
9 A बितथे सुपि ; B वितथे अपि
10 B ० लाभि
11 A & B ०भावं
12 C ०खिता न रते सद लोके
13 B सुसुषिता सद ते नव लोके येषु प्रिया नास्ति

ये वनकन्दरकेऽभिरमन्ति[1]

श्रामणकं सुसुखं[2] अनुभोन्ति ॥१३

येष ममापि तु नास्ति कहिंचि[द्]

येष परिग्रहु [सर्वशु नास्ति]।

खड्गसमा विचरन्तिमु लोके[3]

ते गगने पवनेव व्रजन्ति ॥१४॥

भावितु मार्ग प्रवर्तितु ज्ञानं

शून्यकधर्मनिरात्मनु[4] सर्वे।

येन विभावित भोन्तिमि [धर्मा-

स्तस्य भ]वेत् प्रतिभानमनन्तम् ॥१५॥

सूसुखिता वत ते नर लोके

येष न सज्जति[5] मानसु लोके।

वायुसमं सद तेष्विह चित्तं[6]

नो च प्रियाप्रियु विद्यते सङ्गो[7] ॥१६॥

अप्रियु ये दुखि[8] तेहि निवासो

ये हि[9] प्रिया दुखि तेहि वियोगो।

अन्त उभे अपि[10] एति जहित्वा[11]

ते सुखिता नर ये रत धर्मे ॥१७॥

1 C ०रमन्तो
2 C सुसुखि॰
3 A & B लोक॰
4 A ० कु ; B ०क
5 B सर्जति ; C येष न जति
6 C तिष्ठति पवित्तं
7 A विद्यति सङ्गो ; B विद्यति सङ्गे
8 A & B दुखु
9 A पि
10 C इति
11 A जनित्वा

योे अनुनीयति श्रुत्विमि धर्मान्[1]
स प्रतिहन्यति श्रुत्व अधर्मम्[2] ।
सो मदमानहतो विपरीतो
मानवशेन दुखि[3] अनुभोति[4] ॥१८॥
ये समताय प्रतिष्ठित भोन्ति
नित्यमनुन्नत नावनताश्च ।
ये प्रियतोऽप्रियतश्च सुमुक्ता-
स्ते सद मुक्तमना विहरन्ति ॥१९॥
शीले[5] प्रतिष्ठितु सूपरिशुद्धे
ध्याने[6] प्रतिष्ठितु नित्यमचिन्त्ये ।
ये वनकन्दरि शान्ति रमन्ते
तेष न विद्यति वीमति[7] जातु ॥२०॥
ये च पुनर्वितथे प्रतिपन्नाः
कामगुणेषु रताः सद बालाः ।
गृद्ध्र यथा कुणपेष्वधिमुक्ता[8]
नित्यवशानुगता नमुचिस्य[9] ॥२१॥

अस्मिन् खलु पुनर्गाथाभिनिर्हारे भाष्यमाणे[10] चन्द्रप्रभः कुमारभूतः अचिन्त्येषु बुद्धधर्मेषु गम्भीरनिध्यप्ति-निर्देशकौशल्य-

1 A धर्मं ; B धर्मा
2 B श्रुति सुधर्मा
3 A & B दुखं
4 B अनुभोन्ति
5 C शीलि
6 A ध्यानि ; B ध्यान
7 A वीमन
8 B यथाकुल विस्योधिभुक्ताः ; C कुमापेष्व०
9 C नमुचिष्ये
10 A ०र्हारे ते तो वीणाशब्दाभिश्वरमाणो ; B ०र्हारकेतो वीणाशब्दो निश्चरमाणो

मनुप्राप्तः सूत्रान्तनिर्हारावभासं च प्रतिलब्धवान्[1]। पञ्च-शिखस्य च[2] गन्धर्वपुत्रस्य घोषानुगायाः क्षान्तेः प्रतिलम्भोऽभूत्। अप्रमेयाणां च सत्त्वानां देवमानुषिकायाः प्रजाया अनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पन्नानि अप्रमेयाणां च सत्त्वानामर्थः कृतोऽभूत्।

[ इति श्रीसमाधिराजे अचिन्त्यबुद्धधर्मनिर्देशपरिवर्तो नामोनविंशतितमः ॥१९॥ ]

1 A & B & Tib. drop सूत्रान्तनिर्हारावभासं च प्रतिलब्धवान्

2 A & B drop च

# विंशपरिवर्तः

तत्र खलु भगवांश्चन्द्रप्रभं[1] कुमारभूतमामन्त्रयते स्म । तस्मा-त्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन सर्वकुशलमूलशिक्षागुणधर्म-निश्रितेन भवितव्यमसंसर्गबहुलेन च भवितव्यम् । पापमित्र-परिवर्जकेन[2] कल्याणमित्रसन्निश्रितेन परिपृच्छकजातीयेन धर्म-पर्येष्ट्यामतृप्तेन प्रामोद्यबहुलेन धर्मार्थिकेन धर्मकामेन[3] धर्मरतेन धर्मपरिग्राहकेण[4] धर्मानुधर्मप्रतिपन्नेन शास्तृसंज्ञानेन सर्व-बोधिसत्त्वेषूत्पादयितव्या[5] । यस्य[6] चान्तिकादिमं धर्मपर्यायं[7]

1 A & B तत्र भगवान् पुनरपि चन्द्रप्रभं

2 A महासत्त्वेनेमं महाकरुणावतारं धर्मपर्यायमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्-संबोधिमभिसंबोद्धुकामेन सर्वकुशलमूलशिक्षागुणधर्मनिश्रितेन सुपरिशुद्धशीलेन भवितव्यम् । असंसर्गबहुलेन पापमित्रपरिवर्जितेन ; B महासत्त्वेन महाकरुणा...सर्वकुशलशिक्षा...असंग-बहु...वर्जितेन

3 A & B परिपृच्छकेन जातीयेन धर्मपर्येष्ट्यभियुक्तेन धर्मा०

4 B धर्मेण सतत परिग्रा०

5 A ०पन्नेन कुमार बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वानामन्तिके महाकरुणाचित्तमुत्-पाद्य अनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयितव्यम् । पुनरपरं कुमार बोधिसत्त्वेन महा-सत्त्वेनेमं महाकरुणावतारं धर्मपर्यायमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेना-रब्धवीर्येण कायजीवितनिरयन्तेन भूत्वा अजस्रं कल्याणमित्राणि पर्येषितव्यानि सेवितव्यानि भजितव्यानि पर्युपासितव्यानि । अनाथेन यस्य महाकरुणावतारस्य धर्मपर्यायस्य देशयितारः पर्येष्टना च कुमार तेन बोधिसत्त्वेन महासत्त्वेन कल्याणमित्राण्यध्याशयेन तेभ्यः कल्याण-मित्रेभ्योऽन्तिकादयं महाकरुणावतारो धर्मपर्यायः श्रोतव्य उद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः उद्देष्टव्यः स्वाध्यातव्योऽरणभावनया भावयितव्यो बहुलीकर्तव्यः परेभ्यश्च विस्तरेण संप्रकाशयितव्यः ; B ०पन्नेन...मन्तिकेन महा...निरयजेन ......पर्युपासितव्यानि......अनाथेन य अस्य महा......पर्येष्य......उपदेष्टव्यः...... प्रकाशयितव्यः ।

6 A & B तस्य

7 A & B महाकरुणावतारं धर्म०

शृणोति तेन तस्यान्तिके [1]प्रीतिगौरवं शास्तृसंज्ञा[2] चोत्पादयितव्या। यः[3] कुमार बोधिसत्त्वो महासत्त्व इमान् धर्मान् समादाय वर्तते स क्षिप्रमनाच्छेद्यप्रतिभाननिर्यातो भवति। अचिन्त्यबुद्धधर्माधिमुक्तश्च भवति। गम्भीरेषु च धर्मेषु निध्यप्तिं गच्छति। आलोकभूतश्च भवति सदेवकस्य लोकस्य काङ्क्षा-विमति-विचिकित्सान्धकारविधमनतया[4]।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

अभ्यतीत बहुकल्पकोटियो
अप्रमेय अतुला अचिन्तियाः।
यद् अभूषि [5]द्विपदानमुत्तमो
इन्द्रकेतुध्वजराज नायकः ॥१॥

सो [स]माधि[मिमु शान्तु] देशयि
यत्र नास्ति नरु जीव पुद्गलः[6]।

1 C तीव्र    2 A ०संख्या

3 A & B ०तव्या यदा च कु०

4 A & B add बोधिसत्त्वो महासत्त्वः कल्याणमित्रपर्येषणशुश्रूषणपरिचर्यास्वपरिखिन्नमानसो भवति। तदायं कुमार बोधिसत्त्वो महासत्त्वः सुकरेणानुत्तरां सम्यक्संबोधिमभिसंबुध्यते। सुकरेण चेमं महाकरुणावतारं धर्मपर्यायं प्रतिलभते। तस्मात्तर्हि कुमारादिप्तशिरश्चैलोपमेन ते भूत्वा सदा कल्याणमित्राणि पर्येषितव्यानि सेवितव्यानि पर्युपासितव्यानि भजितव्यानि अलोभेन। तत्कस्य हेतोः। कल्याणमित्राधीना हि कुमार बोधिसत्त्वानां महासत्त्वानामनुत्तरा सम्यक्संबोधिः किमङ्ग पुनरयं महाकरुणावतारो धर्मपर्यायः। तस्मात्तर्हि कल्याणमित्रपर्येषणशुश्रूषणपरिचर्यास्वपरिखिन्नमानसो भविष्यामीत्येवं त्वया कुमार सदा शिक्षितव्यम्।

अथ खलु भगवांस्तस्यां वेलायामस्यैव महाकरुणावतारस्य धर्मपर्यायस्योद्भावनार्थं चन्द्रप्रभस्य कुमारभूतस्येमं पूर्वयोगकथानिर्देशं गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म।

5 C द्रुप०    6 A पुंगवः

माय बुद्बुदु मरीचिविद्युता
सर्व धर्म दक[1]चन्द्र सन्निभाः ॥२॥
नास्ति [स]त्त्व मनुजो च लभ्य[ते[2]
कालु कृ]त्व परलोकि गच्छि यो[3] ।
नो च कर्मकृतु विप्रणश्यते
कृष्ण शुक्ल फल देति तादृशम्[4] ॥३॥
एष युक्तिनयद्वार भद्रकं
सूक्ष्म दुर्दृशु[5] जिनान गोचराः ।
यत्र अक्षरपदं न लभ्यते
बुद्धबोधि भगवान् प्रजानति ॥४॥
धारणी विपुलज्ञानसञ्चया
सूत्रकोटिनियुतान आगता[6] ।
बुद्धकोटिनियुतान गोचर-
स्तं समाधि भगवान् प्रभाषते ॥५॥
आतुराणमय व्याधिमोचको
बोधिसत्त्व समुदानितं धनम् ।
सर्वबुद्धस्तुत संप्रकाशितो[7]
देवकोटिनियुतेहि[8] पूजितः ॥६॥

1 C दग॰
2 B नास्ति सत्धुमनुजो वल॰
3 C गच्छिया
4 A & B यादृशम्
5 B दुर्दृशु ; C दृष्टश
6 B आगमो ; C आगमे ; Tib. 114b, l. 5: འོང ।
7 C संप्रभाषितो
8 C ॰नयुतेहि

सर्वबालजन भूतचोदना[1]
तीर्थिकेहि परिवर्जितः सदा ।
श्रेष्ठशीलधनु बुद्धवर्णितं
विदुरतेव गगने न[2] लिप्यते ॥७॥

येहि पूजित जिनान कोटियो
दानशीलचरिता विचक्षणाः ।
पापमित्र पुरि येहि वर्जिता
तेष पैतृकधनं निरुत्तरम् ॥८॥

तत्र भिक्षु स्थितु धर्मभाणको
ब्रह्मचारि सुगतस्य औरसः ।
श्रुत्व धर्ममिममानुलोमिकं
चित्तुपादेसि य[3] लोकनायकः ॥९॥

इन्द्रकेतुध्वजराजु[4] नायको
अध्यभाषि अमु[5] धर्मभाणकम्[6] ।
भिक्षुभाव[7] परमं ति दुष्करं
चित्तुपाद[8] वर अग्र बोधये ॥१०॥

1 A & B ०चोदको ; Tib. 114b, l. 7: ཡང་དག་སྟོན །

2 B ०त विदुयतावरागनेन 3 A चिन्तु यादिशिय ; B चित्तु पादिमिय ; Tib, 115a, l. 3: འཇིག་རྟེན་ཉིད་སེམས་ཀུང་བསྐྱེད་པར་གྱུར །

4 A ०ज लोक० 5 A & B अयु 6 B ०भाणको

7 C भिक्षुभिक्षु ; Tib. 115a, l, 4: དགེ་སློང་དངོས་པོ །

8 C चिन्तुपादु

शीलु रक्ष मणिरत्नसन्निभं
मित्र सेव सद आनुलोमिकम्[1]।
पापमित्र न कदाचि[2] सेवतो
बुद्धज्ञानमचिरेण लप्स्यसे[3] ॥११॥

[इति श्रीसमाधिराजे इन्द्रकेतुध्वजराजपरिवर्तो
नाम विंशतितमः] ॥

1 A सेवन आनु॰ 2 B & C ॰म कपाचि
3 A लप्स्यते A & B & Tib. 115a, l, 7 add :—
इन्द्रकेतु ध्वजराजु अन्तिके
येन बोधिवरचित्तुपादितम् ।
सा अभूषि अहु धर्मभाणकः
ब्रह्मचारि सुगतस्य औरसः ॥

# एकविंशपरिवर्तः

[1]आसि पूर्वमिह जम्बुसाह्वये
अप्रमत्त दुवि श्रेष्ठ दारकौ[2] ।
प्रव्रजित्व सुगतस्य शासने
खड्गभूत वनषण्डमाश्रितौ ॥१॥

ऋद्धिमन्त चतुर्ध्यानलाभिनौ
काव्यशास्त्रकुशलौ सुशिक्षितौ[3] ।
अन्तरिक्षपद[4]भूमिकोविदौ
ते असक्त गगने व्रजन्ति च ॥२॥

1 In Ms. C the last line of the previous chapter and the first line of this chapter are written in one line without any indication for the end or beginning of a chapter.

A & B & Tib. 115b-116a insert तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म । तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन सर्वकुशलमूलशिक्षागुणधर्मनिश्रितेन सुपरिशुद्धशीलेन भवितव्यम् । असंसर्गबहुलेन च भवितव्यम् । पापमित्रपरिवर्जितेन कल्याणमित्रसन्निश्रितेन पृच्छकजातीयेन धर्मपर्येष्ट्यभियुक्तेन धर्मार्थिकेन धर्मरतेन धर्मपरिग्राहकेण धर्मानुधर्मप्रतिपन्नेन शास्तृसंज्ञाज्ञानेन सर्वबोधिसत्त्वेषूत्पादयितव्या । यस्य चान्तिकादिमं धर्मपर्यायं शृणोति तेन तस्यान्तिके प्रीतिगौरवं शास्तृसंज्ञा चोत्पादयितव्या । यः कुमार बोधिसत्त्वो महासत्त्वः इमं सर्वकुशलमूलशिक्षागुणधर्मनिश्चयं धर्मपर्यायं समादाय वर्तते स क्षिप्रमनाच्छेद्यप्रतिभाननिर्जतो भवति । अचिन्त्यबुद्धधर्माभिनिर्हारश्च भवति । गम्भीरेषु च बुद्धधर्मेषु निध्यप्तिं गच्छति । आलोकभूतश्च भवति सदेवकस्य लोकस्य कांक्षाविमतिविचिकित्सान्धकारविधमनतया ।

अथ खलु भगवान् तस्यां वेलायां सर्वधर्मकुशलमूलशिक्षागुणधर्मनिर्देशस्य धर्मपर्यायस्योद्भावनार्थं चन्द्रप्रभस्य कुमारभूतस्येमं पूर्वयोगकथाबन्धं गाथाभिगीतेन विस्तरेण सम्प्रकाशयति स्म ।

2 A ०मत्त दुवि श्रेष्ठि ; C अत्र मन्त दुचि ; Tib. 116a, l. 2: གཡེལ་བ་མེད་པའི་ཁྱེའུ་མཆོག་གཉིས་བྱུང་སྟེ། 3 A & B विचक्षणौ

4 A ०खसड० ; C सद ; Tib. 116a, l. 4. བར་སྣང་གི་ནི་རྗེས་དང་ས་ཡང་རིག།

ते च तत्र वनषण्डि शीतले
नानपुष्पभरिते मनोरमे ।
नानपक्षि-द्विजसङ्घ-सेविते
अन्यमन्य कथसंप्रयोजिते ॥३॥

तेन राज मृगया अटन्तके[1]
शब्द श्रुत्व वनु तं उपागमी[2] ।
दृष्ट्व[3] पार्थिव तथ धर्मभाणकौ[4]
तेषु प्रेमपरमं उपस्थहि[5] ॥४॥

[तेहि] सार्धु[6] कथानुलोमिकीं
कृत्व राजु पुरतो निषीदि सौ[7] ।
तस्य राज्ञ बलकाय नन्तको
[षष्टि]कोटिनियुतान्युपागमी ॥५॥

एकमेकु तेषु[8] धर्मभाणको
राजमब्रवी शृणोहि क्षत्रि[यो ।
बुद्धपादु] परमं सुदुर्लभो
अप्रमत्तु सद भोहि पार्थिव ॥६॥

1 A तटन्तके ; C तद्दत्तको ; Tib. 116a, l. 5: རྒྱལ་པོ་རི་དགས་འཚོར་ཤིང་སོང་སོང་ན །

2 B उपायमी
3 B दृष्ट
4 B भाण
5 A & B उपस्थपी
6 A साधु ; B साब्रुक॰
7 A & B सो
8 A तेष मे कुरुत B ; एकमेकु च तु॰

आयु गच्छति सदा न वस्थितं
गिरिनदीय सलिलेव[1] शीघ्रगम् ।
व्याधिशोकज[रपीडि]तस्य ते
नास्ति त्राणु[2] यथ कर्म भद्रकम् ॥७॥
धर्मपालु भव राजकुञ्जरो
रक्षिमं[3] दशबलान शासनम् ।
क्षीण कालि[4] परमे सुदारुणे
धर्मपक्षि स्थिहि[5] राजकुञ्जर[6] ॥८॥
एव ते बहुप्रकार पण्डिता
ओवदन्ति[7] तद तं नराधिपम् ।
सार्धु षष्टिनियुतेहि पार्थिवो
बोधिचित्तमुदपादयत्तदा[8] ॥९॥
श्रुत्व धर्म तद राजकुञ्जरः
[9]सूरतानखिलान भाषतो ।
प्रीतिजात सुमना उदग्रको
वन्द्य पाद शिरसाय प्रक्रमी ॥१०॥
तस्य राज्ञ बह्वोऽन्य भिक्षवो
लाभकाम प्रविशिन्तु तत् कुलम्[10] ।

1 A सलिलं च 2 C त्राहु ; Tib. 116b, l. 2: ཁྱོད་ལ་དགེ་བའི་ལས་འདྲ་སྐྱབས་གཞན་མེད །
3 B रक्षितं 4 A कारि
5 C स्थिह 6 B ०कुञ्जरं
7 A औवदन्ति 8 A ०पादय तदा ; C ०पायं तदा
9 B शूर० 10 B प्रविशिन् स तत्कुलं

तेष दृष्ट चरियान[1] तादृशीं
　　तेषु राज[2] न तथा सगौरवम्[3] ॥११॥
तच्च शासनमतीतशास्तृकं[4]
　　पश्चिमं च त[द्] वर्षु वर्तते[5] ।
जम्बुद्वीपिसु परित्त[6] भाजना
　　प्रादुर्भूत बहवो असंयताः ॥१२॥
उत्कु लुब्ध[7] बहु तत्र भिक्षवो
　　लाभकाम उपलम्भदृष्टिकाः ।
विप्रनष्ट सुगतस्य शासनाद्
　　ग्राहयिंसु बहुलं[8] तदा नृपम्[9] ॥१३॥
घातयेति[10] उभि धर्मभाणकौ[11]
　　ये उच्छेदु प्रवदन्ति[12] तीर्थिकाः[13] ।

1 B चर्यान ; C चरियां न　　2 A राजा
3 B ०रवाः　　4 C शास्तुकं
5 B ०मश्चि तद वर्ष वर्त्तते　　6 A ०पसु परीत ; Tib. 116b, l. 6-7:
བསྟན་པ་དེ་ཡང་ སྟོན་པ་འདས་པ་ཡི །
དེ་ཚེ་ལོ་ཡི་ ཐ་མར་གྱུར་པ་སྟེ །
འཛམ་བུ་འི་གླིང་ན་སྣོད་གྱུར་རབ་ཏུ་ཉུང་ །
མ་བསྡམས་པ་དག་ཤིན་ཏུ་མང་པོ་བྱུང ॥

7 A उत्कुलुस ; Tib. 116b, l. 7: བཀྲམ་ཞིང་ཆགས ।

8 A बहुतं ; Tib. 117a, l. 1: བསྒྱུར་ཅིང་བྱེད་དུ་བཅུག ।

9 B बहुतत्तदानिपम्　　10 A घातएति ; B घाटएति ; C पातयेति ; Tib. 117a, l. 1: བསད་པར །　　11 B ०भाणको　　12 B उच्छेदन्ति
13 C ये उच्छेद प्रतिपन्न पार्थिवाः

दीर्घचारिक समादपेन्ति ते[1]

निर्वृतीय न ते किंचि दर्शिका[2] ॥१४॥

कर्म नश्यति विपाकु नश्यति[3]

स्कन्ध नास्तीति वदन्ति कुहकाः[4] ।

तां क्षिपाहि विषयादु [5]पार्थिवा

एवमेव चिरु[6] धर्म स्थास्यति ॥१५॥

श्रुत्व तेष वचनं[7] तदन्तरं

कांक्ष प्राप्तुभुत[8] राजकुञ्जरः ।

घातयिष्यि अमु धर्मभाणकौ[9]

मा उपेक्षि तु[10] अनर्थ भेष्यति ॥१६॥

तस्य राज्ञ अनुबद्ध देवता

पूर्वजाति सहचीर्णचारिका ।

दीर्घरात्र हितकाम पण्डिता

सा अवोचि तद[11] राजपार्थिवम् ॥१७॥

चित्तुपाद मा जनेहि[12] ईदृशं

पापमित्रवचनेन क्षत्रियाः ।

1 A ०दयोन्ति ; B ०दयन्ति ते ; Tib. 117a, l. 2: ཡུན་རིང་སྤྱོད་པར་ཡང་དག་འཇུད་བྱེད་ཀྱང་ །

2 A निर्वृति ह्न काहिंचि दर्शकाः ; B निर्वृतीयन्न काहिञ्चि दर्शिकाः ; C ०दर्थिका

3 B ०कु न पश्यति

4 C & B स्कन्ध नास्ती विवदन्ति कूहकाः

5 A ०पार्थिवा ; B ०यात्तु पार्थिवा ; Tib. 117a, l. 3: ཡུལ་ནས །

6 B विन्नु

7 C तेष श्रुत्व व०

8 A प्राप्त अस्तु ; B प्राप्त अनु रा०

9 B घाटसिष्य इलि धर्मभाणको

10 A मां पेक्षि

11 A & B स्रुत

12 B चिन्तुपादमजनेहि

मा त्वं[1] भिक्षु दुवि धर्मभाणकौ[2]

पापमित्रवचनेन घातय[3] ॥१८॥

न त्व किञ्चि स्मरसी[4] नराधिप

यत्ति तेहि[5] वनषण्डि[6] भाषितम् ।

क्षीणकालि परमे सुदारुणे

धर्मपक्षि[7] स्थिहि[8] राजकुञ्जरः ।

राज भूतवचनेन चोदितः

सो न रिंचति जिनान[9] शासनम् ॥१९॥

तस्य राज्ञ तद भ्रात[10] दारुणः

प्रातिसीमिकु[11] स तेहि ग्राहितः[12] ।

एष देव तव भ्रात पापको[13]

जीवितेन न जातु नन्दते[14] ।

1 A & B मान्यु

2 B ०भाणको

3 A & B च्छोरय ; Tib. 117a. l. 6: མ་སྣང་ཤིག །

4 A स्मरती

5 C यन्ति तेहि ; B पत्तिते हि

6 A ०खराड'

7 A ०पत्त

8 C स्थिह

9 A & C जिनानु०

10 B राज्ञि तद भ्रात दा० ; तद भ्रति

11 A ०तुन ग्रा० ; B प्रातिशीमिकुशल तेन ग्रा०

12 After this verse, C repeats verse no. 14.

13 A देव तव पापको ; Tib. 117b, l. 1:

དེ་ཚེ་རྒྱལ་པོའི་ནུ་བོ་མ་རུངས་པ །

ཉེན་འཁོར་རྒྱལ་པོ་ཁྱེད་པ་དེས་སྨྲད་དེ །

རྒྱལ་པོ་ཁྱོད་ཀྱི་གཅེན་ནི་ སྡིག་པ་ཅན །

14 A & B नतिजात नन्दने

तौ च भिक्षु दुवि घोर वैद्यका[1]
ते व्रजन्ति गगनेन विद्यया ॥२०॥

तस्म[2] श्रुत्व तव मूलमागता
सर्वि भूत तव विज्ञपेमथ[3] ।

क्षिप्र [घातय[4]] घोर वैद्यका
मा ति पश्चि[5] अनुतापु भेष्यति ॥२१॥

सन्नहित्व[6] तद राजकुञ्जरो
पापमित्रवचनेन प्रस्थितः ।

सर्वसैन्य[7]परिवारितो नृपो[8]
यत्र भिक्षु वनि तं[9] उपागतो ॥२२॥

ज्ञात्व[10] घोरमतिदारुणं नृपं[11]
नागयक्ष वनि[12] तत्र ये स्थिताः ।

इष्ट[13] वर्ष तद तत्र पातित[14]
तेन राज सह सेनया हतो[15] ॥२३॥

1 C वैद्यिका 2 A तस्य; C तेस्म

3 A भूत तव विज्ञपेः; B विज्ञयेमथ; C पिजतेमथः; Tib. 117b, l. 2: ཐམས་ཅད་འདུས་དེ་གསོལ་བ་འདི་བས་པ་ནི །

4 B घाटय 5 A पिश्च 6 A सह्यजित्व

7 B ०सेन० 8 C ०वारित्यपो 9 A & B वनतं

10 C ज्ञान 11 B ०रुणान्नृपं 12 A & B वन

13 C इव्य; Tib. 117b, l. 5: རྡོ་དང་སོ་ཕག་ཆར་པབ་ཕྱིར་བསྐྱེད་དེ །

14 A इषु 15 A & B तेहि राज सह सेनया हतो

पापमित्रवचनेन पश्यथा[1]
　　कालु कृत्व तद राज दारुणम्[2] ।
येन क्रोधु कृतु धर्मभाणके[3]
　　सो अवीचि गतु षष्टिजातियो ॥२४॥

तेपि[4] भिक्षु बहवोपलम्भिका[5]
　　येहि ग्राहितु राज[6]क्षत्रियो ।
जातिकोटिशत अप्यचिन्तियो[7]
　　वेदयिंसु नरकेषु वेदनाम् ॥२५॥

देवता याय राजु[8] चोदिताः[9]
　　याय[10] रक्षित धर्मभाणकौ[11] ।
ताय बुद्ध यथ गङ्गवालिका
　　दृष्ट्व[12] पूजित चरन्तु चारिकाम् ॥२६॥

षष्टिकोटिनियुता अनूनका
　　येहि धर्म श्रुतु सार्धु[13] राजिना ।
येहि बोधि[14] वरचित्तु पादितं
　　बुद्ध भूयि पृथु लोकधातुषु ॥२७॥

तेषु आयु[15] बहुकल्पकोटियो
　　तेष ज्ञानमतुलमचिन्तियम् ।

1 B स्यस्यथा ; C पश्य मां　2 A & B दारुणो　3 B ०भाणको
4 C तेहि　5 B ०लंका　6 A & B सराज०
7 B ०शतप्यचिन्तियां ; C शत ते प्यचि०　8 A पराज ; B ययराज
9 B ०चोदिता　10 A & B यया
11 B ०भाणको　12 A & B दृष्ट
13 A ०श्रुश्रु सार्धुं ; B श्रुत्व साध्रु　14 A वोहि　15 C माष्ु

ते हि[1] सर्विमु समाधि[2]भद्रकं

देशयित्व द्विपदेन्दु निर्वृताः[3] ॥२८॥

एतु श्रुत्व वचनं निरुत्तरं

शीलब्रह्मगुणज्ञान सञ्चयम् ।

अप्रमत्त भवथा अतन्द्रिता

बुद्धज्ञानमचिरेण[4] लप्स्यथा ॥२९॥

द्रक्ष्यथा दशदिशो तथागतान्

शान्तचित्तकृपमैत्रलोचनान् ।

सर्वलोक-शरणं[5] परायणं

धर्मवर्षु जगि[6] उतसृजिष्यथा[7] ॥३०॥

[इति श्रीसमाधिराजे पूर्वयोगपरिवर्तो नाम

एकविंशतितमः ॥२१॥]

1 A & B तेपि

2 B सर्विस समाधि

3 B देसायित्व दुप० ; C देशयितु दुपदेन्द्रु

4 B बुद्धज्ञान न चि०

5 B ०कोश०

6 B वपु जगि

7 A & B add—सिया कुमारा दुवि धर्मभाणको

न एव द्रष्टव्यमिहान्य ते भूत् ।

दीपंकर तत्र अभूषि एको

द्वितीयु चाहं तद धर्मभाणकः ॥३१॥

मैत्रेयुराहु अभू तस्मि काले

येन श्रुतो धर्म स आनुलोमिकीं ।

या देवता आसि हितैषी पण्डितो

अहु तेन कालेन कुमार सोभूत् ॥३२॥

यो आतुरासी तस्य अभूषि राज्ञा

विग्राहितो भिक्षुभि लोककामैः ।

घातेहि एतौ विदु धर्मभाणकौ

स देवदत्तस्तहि तस्मि काले ॥३३॥

## द्वाविंशपरिवर्तः

अथ[1] खलु भगवांश्चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म[2]। तस्मात् तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन कायेऽनध्यवसितेन जीविते निरपेक्षेण भवितव्यम्[3]। तत् कस्य हेतोः। काय[4]-[जीविता]ध्यवसानहेतोर्हि कुमार अकुशलधर्माभिसंस्कारो[5]

1 This chapter has been edited by Prof. K. Régamey and so his readings have been accepted in most places. In the Tibetan version, Chapter XXII ends with the three stanzas given in the fn. 4, and Chapter XXIII commences with the following words, i.e., तत्र भगवान् etc.

2 A & B तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म।

3 A & B महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक् संबोधिमभिसंबोद्धुकामेन कायजीविते चानवध्यवसितेन भवि०

4 A & B कायजीवितानध्यवसितानां च कुमार बोधिसत्त्वानां महासत्त्वानां न दुर्लभा भवत्यनुत्तरा सम्यक् सम्बोधिः। किमङ्ग पुनरयं समाधिः। तस्मात् तर्हि कुमार कायजीवितानध्यवसितो भविष्यामीत्येवं त्वया कुमार सदा शिक्षितव्यम्। तत्रेदमुच्यते।

अध्यवसान करित्वन बाला
पूतिकि कायि अशाश्वति नित्यें।
जीविति चैवबलं विय पापं
कुर्विषु नित्यबुधाः सुखहेतोः ॥१॥

येष न विद्यति अध्यवसानो
कायि असारिकि जीविति चैव।
ते निहनित्वन मारचमूनां
बोधिवटस्मि प्रबुद्धयषु बोधिम् ॥२॥

ये पुनः कायि निरात्मकि शून्ये
जीविति स्वप्ननिभे चलिऽवश्ये।
अध्यवसान उभेपि करोन्ति
ते च्युत यान्ति नरा नरकानी ॥३॥

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म। तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन

5 A & B ०कर्माभि०

भवति। तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन न रूपकायत-स्तथागतः प्रज्ञातव्यः। तत् कस्य हेतोः। धर्मकाया हि[1] बुद्धा भगवन्तो धर्मकायप्रभाविताश्च[2] न रूपकायप्रभाविताः। तस्मात्तर्हि[3] कुमार बोधिसत्त्वेन महासत्त्वेन तथागतकायं प्रार्थयितुकामेन तथागतकायं ज्ञातुकामेनायं समाधिरुद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः उद्देष्टव्यं स्वाध्यातव्यो वाचयितव्यो[4] भावनायोगमनुयुक्तेन भवितव्यं परेभ्यश्च विस्तरेण संप्रकाशयितव्यः। तत्र कुमार तथागतस्य[5] कायः शत-पुण्यनिर्जातया[6] बुद्ध्यानेकार्थनिर्देशो[7] धर्मनिर्जातः[8] अनिमित्तः[9] [सर्वनिमित्ता]पगतो गम्भीरः अप्रमाणः अप्रमाणधर्मः अनिमित्त-स्वभावः[10] सर्वनिमित्तविभावितः अचलोऽप्रतिष्ठितोऽत्यन्ताकाश[11]-[स्वभावो]ऽदृश्यश्चक्षुःपथ[12]समतिक्रान्तो धर्मकायः प्रज्ञातव्यः। अचिन्त्यः चित्तभूमिविगतः[13] सुखदुःखाविप्रकम्प्यः सर्वप्रपञ्चसम-तिक्रान्तोऽनिर्देश्यो[14]ऽनिकेतो बुद्धज्ञानं प्रार्थयितुकामानां घोष-

1 A & B धर्मकायप्रभाविताश्च  2 A drops धर्मकायप्रभाविताश्च

3 A & B ॰ विताः। तत्र  4 A drops वाचयितव्यः

5 A ॰गतकायः  6 B पुण्यानिर्यातया

7 B drops उद्देष्टव्यः स्वाध्यातव्यः वाचयितव्यः भावनायोगमनुयुक्तेन भवितव्यम्। परेभ्यश्च विस्तरेण संप्रकाशयितव्यः। तत्र कुमार तथागतस्य कायः शतपुण्यनिर्यातया बुद्ध्या-नेकार्थ॰ ; also बुद्ध्या एकार्थनिर्देशो  8 C धर्मनिर्यातः

9 B & C आनिमित्तः  10 B & C आनिमित्त॰

11 A ह्यन्ताकाश॰ ; B अत्यन्ताकाश॰  12 C ॰क्षुष्मता॰ ; B ॰क्षुःप्रथमम॰

13 A & B विगमः  14 A & B drop अनिर्देश्यः

पथ[1]समतिक्रान्तः ससारो रागसमतिक्रान्तः[2] अभेद्यो दोषपथ[3]-समतिक्रान्तो दृढो[4] मोहपथसमतिक्रान्तो निर्दिष्टः शून्यतानिर्देशेन अजातो जातिसमतिक्रान्तः अनास्रवः विपाकसमतिक्रान्तः[5] नित्यो व्याहारेण व्यवहारश्च शून्यः[6] निर्विशेषो निर्वाणेण[7] निवृतः शब्देन शान्तो घोषेण सामान्यः सङ्केतेन संकेतः परमार्थेन परमार्थो भूतवचनेन[8] शीतलो निष्परिदानः[9] अनिमित्तः अमन्यितः[10] अनिन्दितः अप्रपञ्चितः अल्पशब्दो निर्देशेन[11] अपर्यन्तो वर्णनिर्देशेन[12] महाभिज्ञापरिकर्मनिर्जातः अस्मृतितः अविदूरे महाभिज्ञापरिकर्मनिर्देशेन। अयमुच्यते कुमार तथागतकाय इति[13]।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

य इच्छे लोकनाथस्य कायं जानितुमीदृशम्।
इमं[14] समाधिं भावित्वा[15] कायं बुद्धस्य ज्ञास्यति ॥१॥
पुण्यनिर्जातु[16] बुद्धस्य कायः शुद्धः प्रभास्वरः[17]।
समेति सोऽन्तरीक्षेण नानात्वं नास्य लभ्यते ॥२॥

1 A & B drop ॰पथ॰ 2 A सराङ्गै राग समति॰ ; B सरागो रागस॰ ; C साररागः ; Tib. སྙིང་པོ་སྙེ | 3 B drops ॰पथ॰
4 A & B drop दृढो मोहपथसमतिक्रान्तः ; Régamey, ध्रुवो
5 A & B drop अनास्रवः विपाकसमतिक्रान्तः
6 A & B drop व्यवहारश्च शून्यः 7 A निर्वाणेन
8 A & B यथाभूत॰ 9 Tib. ཡོངས་སུ་གདུང་བ་མེད་པས |
10 B अमनितो 11 A & B drop अप्रपञ्चितः अल्पशब्दो निर्देशेन
12 Tib. ཁ་དོག་བསྟན་པས་མུ་མེད་པ |
13 A & B ॰निर्जातोऽयं स उच्यते कुमार तथागतकाय इति
14 A इय 15 A & B भावेतु
16 C पुण्यानिजातु 17 B शुद्धः कायः प्रभास्वरः

यादृशा बोधिर्बुद्धस्य[1] लक्षणानि च तादृशाः[2] ।
यादृशा लक्षणास्तस्य कायस्तस्य हि तादृशः[3] ॥३॥
संबोधिलक्षणः कायो बुद्धक्षेत्रं हि[4] तादृशम् ।
बला विमोक्षा ध्यानानि सर्वे तेऽप्येकलक्षणाः ॥४॥
एवं[5] सम्भवु बुद्धानां[6] लोकनाथान ईदृशः[7] ।
न जातु केनचिच्छक्यं पश्यितुं मांसचक्षुषा ॥५॥
बहू एवं प्रवक्ष्यन्ति दृष्टो मे लोकनायकः ।
सुवर्णवर्णः कायेन सर्वलोकं प्रभासति[8] ॥६॥
अधिष्ठानेन बुद्धानामनुभावाद्विकुर्वितैः[9] ।
येनासौ दृश्यते कायो लक्षणेहि विचित्रितः ॥७॥
आरोहपरिणाहेन कायो बुद्धस्य दर्शितः[10] ।
न च प्रमाणं कायस्य लब्धं तेन अचिन्तियः[11] ॥८॥
यदि प्रमाणं लभ्येत कायो बुद्धस्य एत्तकः[12] ।
निर्विशेषो भवेच्छास्ता देवैश्च मनुजैरपि ॥९॥
समाहितस्य चित्तस्य विपाकोऽपि[13] तल्लक्षणः[14] ।
तल्लक्षणं नामरूपं शुद्धं भोति प्रभास्वरम् ॥१०॥

1 A ०सत्त्वास्य
2 A & C यादृशाः
3 A & B तस्य कायोऽपि तादृशाः
4 A & B पि
5 B & C एष
6 B एवं सर्वबुद्धानां
7 B ०नाथानां ईदृशः
8 C प्रभास्यति
9 B अनुभावा विकुर्वितः
10 B देशितः ; C बुद्धेना०
11 B अचिन्त्य यः
12 B एतको ; C एन्तको
13 B विपाके०
14 B drops तल्लक्षणः

न चैष केनचिज्जातु[1] समाधिः शान्तु भावितः ।
यथेह[2] लोकनाथेन कल्पकोट्यो निषेवितः ॥११॥
बहुभिः शुक्लधर्मैश्च समाधिर्जनितोऽप्ययम्[3] ।
समाधेरस्य वैपुल्यात् कायो मह्यं न दृश्यते ॥१२॥
यस्य वो यादृशं चित्तं नामरूपं पि[4] ता[दृश]म्[5]।
निःस्वभावस्य चित्तस्य[6] नामरूपं विलक्षणम्[7] ॥१३॥
यस्य चोदारसंज्ञादि[8] नामरूपस्मि वर्तते ।
विसभागाय संज्ञाय उदा[रं] चित्तु जायते ॥१४॥
यस्य चो मृदुकी संज्ञा नामरूपस्मि वर्तते ।
अगृध्रं नामरूपस्मि चित्तं भोति प्रभास्वरम् ॥१५॥
स्मरामी[9] पूर्वजातीषु असंख्येयेषु सत्तसु ।
तिस्रो मे पापिकाः संज्ञा नैवोत्पन्नाः कदाचन ॥१६॥
अनास्रवश्च मे चित्तं कल्पकोट्यो ह्यचिन्तियाः[10] ।
करोमि चार्थं सत्त्वानां न च मे कायु दृश्यते ॥१७॥
यथा च यस्य भावेहि[11] विमुक्तं भोति मानसम् ।
न तस्य तेहि भावेहि भूयो भोति समागमः ॥१८॥

1 C न वैस कैनचि जातु

2 A तथेह ; C ततेह

3 A ०नितो ह्ययम्

4 A नामरूपेपि ; C नामरूपं हि

5 C यादृशम्

6 B drops चित्तस्य

7 A & B तल्लक्षणम्

8 A ०संज्ञादिर्नाम०

9 B स्मराम्यहं

10 B ०कोट्यो हि चि०

11 Tib. དངོས་པོ་ལས །

विमुक्तं मम विज्ञानं सर्वभावेहि सर्वशः ।
स्वभावो ज्ञातु चित्तस्य भूयो ज्ञानं प्रवर्तते ॥१९॥
क्षेत्रकोटीसहस्राणि गच्छन्ति मम निर्मिताः[1] ।
कुर्वन्ति चार्थं सत्त्वानां यत्र कायो[2] न लभ्यते ॥२०॥
अलक्षणो निर्निमित्तो[3] यथैव गगनं तथा ।
कायो निरभिलाप्यो मे दुर्विज्ञेयो निदर्शितः[4] ॥२१॥
धर्मकायो महावीरो धर्मेण काय निर्जितो[5] ।
न जातु रूपकायेण शक्यं प्रज्ञापितुं जिनो ॥२२॥
कथा निर्देशु यस्यैतं श्रुत्वा प्रीतिर्भविष्यति ।
न तस्य मारः पापीयानवतारं लभिष्यति ॥२३॥
श्रुत्वा च धर्मं गम्भीरं यस्य[6] त्रासो न भेष्यति[7] ।
न चासौ[8] जीवितार्थाय[9] बुद्धबोधिं प्रतिक्षिपेत् ॥२४॥
सूत्र[10]कोटीसहस्राणां भूतनिर्देश ज्ञास्यति ।
आलोकभूतो लोकानां येन येन गमिष्यति ॥२५॥

तत्र कुमार तथागतस्य कायो निमित्तकर्मणापि न सुकरं ज्ञातुम् । नीलो वा नीलवर्णो वा नीलनिदर्शनो वा नीलनिर्भासो वा । पीतो वा पीतवर्णो वा पीतनिदर्शनो वा पीतनिर्भासो वा ।

1 A निर्वृताः
2 C कामो
3 B ०णो निनिर्म्मिता
4 C निदर्शन
5 A & B धर्मेण कायु निर्जितो ; B धर्मेण काय निर्जितः
6 C नास्य ;
7 C भविष्यति
8 B न वासौ
9 B ०र्थाया
10 A & C भूत०

लोहितो वा लोहितवर्णो वा लोहितनिदर्शनो वा लोहितनिर्भासो वा। अवदातो वा अवदातवर्णो वा अवदातनिदर्शनो वा अवदातनिर्भासो वा। मञ्जिष्ठो वा मञ्जिष्ठवर्णो वा मञ्जिष्ठनिदर्शनो वा मञ्जिष्ठनिर्भासो वा। स्फटिको वा स्फटिकवर्णो वा स्फटिकनिदर्शनो वा स्फटिकनिर्भासो वा। आग्नेयो वा अग्निवर्णो वा अग्निनिदर्शनो वा अग्निनिर्भासो वा। सर्पिर्मण्डोपमो वा सर्पिर्वर्णो वा सर्पिर्निदर्शनो वा सर्पिर्निर्भासो वा। सौवर्णो वा सुवर्णवर्णो वा सुवर्णनिदर्शनो वा सुवर्णनिर्भासो वा। वैदूर्यो[1] वा वैदूर्यवर्णो वा वैदूर्यनिदर्शनो वा वैदूर्यनिर्भासो वा। विद्युद्वा विद्युद्वर्णो वा विद्युन्निदर्शनो वा विद्युन्निर्भासो वा। ब्रह्मो वा ब्रह्मवर्णो वा ब्रह्मनिदर्शनो वा ब्रह्मनिर्भासो वा। देवो वा देववर्णो वा देवनिदर्शनो वा देवनिर्भासो वा। इति हि कुमार तथागतस्य कायः शुद्धः सर्वनिमित्तैर[2]प्यचिन्त्यः अप्यचिन्त्यनिर्देशो[3] रूपकायपरि[4]निष्पत्त्या न सुकरं सदेवकेनापि लोकेन कायस्य प्रमाणमुद्ग्रहीतुमन्यत्र सर्वाकारैरचिन्त्यः[5] अप्रमेयः।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

यद्रजो लोकधातूषु पांसुसंज्ञानिदर्शनम्।
उत्सह्रदतडागेषु समुद्रेषु च यज्जलम्।
न तेषां लभ्यते अन्तो एत्तका परमाणवः ॥२६॥

1 A & B वैडूर्यो for वैदूर्यो  2 B कायः शुद्धनिमित्तेना०

3 A निमित्तेनाप्यचिन्त्योऽचिन्त्यनिर्देशः सर्वनिमित्तैरप्यचिन्त्योऽचिन्त्यानिर्देशो ; B ०चिन्त्यः अप्यचिन्तनिर्देशः

4 A drops परि  5 C सर्वंकारयौर०

समुद्राद्वालकोटीभिर्मातुं शक्यं जलं भवेत् ।
न तुल्या[1] लोकनाथेन उपमा संप्रकाशिता ।
जलबिन्दवोऽप्रमेयास्तथैव परमाणवः ॥२७॥
पश्याम्येकस्य सत्त्वस्य ततो बहुतरानहम् ।
अधिमुक्ति-चित्तोत्पादो नैककाले प्रजानितुम्[2] ॥२८॥
ये मया आत्मभावस्य भूतवर्णा निदर्शिताः ।
सर्वसत्त्वाधिमुक्तास्तानेतेषामुपमाऽक्षमाः[3] ॥२९॥
निमित्त कर्मणा चैव[4] वर्णनिर्भास ईदृशः ।
शक्यं जानितुं बुद्धस्य विशेषो हीदृशो मम[5] ॥३०॥
निमित्तापगता बुद्धा धर्मकायप्रभाविताः ।
गम्भीराश्चाप्रमेयाश्च तेन बुद्धा अचिन्तियाः ॥३१॥
अचिन्तियस्य[6] बुद्धस्य बुद्धकायोऽप्यचिन्तियः ।
अचिन्तिया हि ते काया[7] धर्मकायप्रभाविताः ॥३२॥

1 Tib. མི་ཏུང་ང །

2 Tib. མོས་པ་དང་ནི་སེམས་བསྐྱེད་པ་དུ་མ་དག་ནི་ཤེས་མི་སླ །

3 Tib. སེམས་ཅན་ཀུན་གྱི་མོས་པ་ཡང །
དེ་དག་དཔེ་ཏུ་བཟོད་མི་འགྱུར །

4 A & C नैव

5 A मया

6 A अचिन्त्य यस्य ; C अचिन्त्यस्य

7 A & B कामा

चित्तेनापि न बुद्धानां कायश्चिन्तयितुं[1] क्षमः ।
तथाहि[2] तस्य कायस्य प्रमाणं नोपलभ्यते ॥३३॥
अप्रमेया हि ते धर्माः[3] कल्पकोट्यो निषेविताः ।
तेनो अचिन्तियः कायो निर्वृतो मे प्रभास्वरः ॥३४॥
अग्राह्यः सर्वसत्त्वेहि न प्रमाणेहि[4] गृह्यते ।
तथा हि[5] कायो बुद्धस्य अप्रमाणो ह्यचिन्तियः[6] ॥३५॥
अप्रमाणेहि धर्मेहि प्रमाणं तत्र कल्पितम्[7] ।
अकल्पितेहि धर्मेहि बुद्धोऽप्येवमकल्पितः[8] ॥३६॥
प्रमाणं कल्पमाख्यातो अप्रमाणमकल्पि[तम्][9] ।
अकल्प्यः कल्पापगतस्तेन बुद्धो अचिन्तियः ॥३७॥
अप्रमाणं यथाकाशं[10] मातुं शक्यं न केनचित् ।
तथैव कायु[11] बुद्धस्य आकाशसमसादृशः ॥३८॥
ये कायमेवं जानन्ति बुद्धानां ते[12] जिनात्मजाः ।
तेऽपि बुद्धा भविष्यन्ति लोकनाथा अचिन्तियाः ॥३९॥

[ इति श्रीसमाधिराजे तथागतकायनिर्देशपरिवर्तो
नाम द्वाविंशतितमः ॥२२॥ ]

1 A काय चिन्तयितुं ; B कायश्चित्तयितुं
2 C तत्रापि
3 C प्रमाणा हि ते धर्म
4 A & B प्रमाणेन
5 B drops हि
6 B तस्य प्रमाणो अचि०
7 A कल्प्यते ; B कल्पते
8 A ०प्येवमचिन्तियः ; B बुद्धस्य वमकल्पितः
9 A ०कल्पियम्
10 A यथाकार्यं
11 A B & C कायो
12 C बुद्धान्ते ते

## त्रयोविंशपरिवर्तः

[1]तस्मात्तर्हि कुमार यो बोधिसत्त्वो[2] महासत्त्वः आकाङ्क्षेत्[3] किमित्यहं चतस्रः प्रतिसंविदः साक्षात्कुर्यामिति। कतमाश्चतस्रः। यदुतार्थप्रतिसंविदं धर्मप्रतिसंविदं [4]निरुक्तिप्रतिसंविदं प्रतिभानप्रतिसंविदम्। इमाश्चतस्रः प्रतिसंविदः साक्षात्कुर्यामिति। तेन कुमार बोधिसत्त्वेन महासत्त्वेनायं समाधिरुद्ग्रहीतव्यः पर्यवाप्तव्यो[5] धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः[6] उद्देष्टव्यः स्वाध्यातव्यो भावयितव्यः परेभ्यश्च विस्तरेण संप्रकाशयितव्यः[7]। भावनायोगमनुयुक्तेन च[8] भवितव्यम्। तत्र कुमार कतमा धर्मप्रतिसंविदः। इमाः कुमार बोधिसत्त्वो धर्मप्रतिसंविद एवं प्रतिसंशिक्षते। [यावन्तो वा रूपव्याहारास्तावन्तस्तथागतस्य वर्णव्याहाराः][9]। एवं वेदनासंज्ञासंस्काराः। यावन्तः कुमार

1 A & B add तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म।
2 A °र य आकाङ्क्षेद् बोधि° ; B तस्मातर्हिं य आकाङ्क्षेद् बोधिसत्त्वो
3 A & B drop आकाङ्क्षेत्
4 A निरुक्त°
5 B drops पर्यवाप्तव्यो
6 B वाचयितव्यः पर्यवाप्तव्यः प्रवर्तयितव्यः
7 A & B add अरण्याभावनया भावयितव्यो बहुलीकर्तव्यः।
8 B & C drop च
9 A तत्र कुमार कतमा धर्मप्रतिसंविदः। यावन्तः कुमार रूपव्याहारास्तावन्तः कुमार तथागतस्य वर्णव्याहाराः। Tib. 123b, l. 2: གཞོན་ནུ་གཟུགས་སུ་བརྗོད་པ་ཇི་སྙེད་ཡོད་པ་གཞོན་ནུ་དེ་བཞིན་གཤེགས་པའི་ བསྔགས་པའི་བརྗོད་ པའང་ དེ་སྙེད་དོ།

विज्ञानव्याहारास्तावन्तस्तथागतस्य वर्णव्याहाराः[1]। इति हि कुमार अप्रमेया अचिन्त्या असंख्येयाः अतुल्यामाप्यापरिमाणास्तथागतस्य रूपवर्णव्याहाराः[2]। इति हि कुमार अपर्यन्ता अनन्ता रूपव्याहाराः[3]। एवमचिन्त्यास्तथागतस्य [4]वर्णव्याहाराः। एवं वेदनासंज्ञासंस्काराः[5]। इति हि कुमार अनन्ता अपर्यन्ता अचिन्त्या विज्ञानव्याहाराः। एवमचिन्त्यास्तथागतस्य वर्णव्याहाराः।

इति हि कुमार अप्रमेया[6] असंख्येयाः संस्कृते[7] दोषाः। अप्रमेया[8] असंख्येया निर्वाणे अनुशंसाः। असंख्येयास्तथागतस्य वर्णाः[9]। इति हि कुमार यावन्ति निर्वाणनामानि[10] तावन्तस्तथागतस्य वर्णाः। इति हि कुमार असंख्येयानि निर्वाणनामानि[11]। असंख्येयास्तथागतस्य वर्णाः।

चत्वार इमे कुमार तथागतस्य वर्णव्याहाराः अचिन्त्या अचिन्त्यव्याहाराः[12]। कतमे चत्वारः। यदुत अचिन्त्यः संस्कारव्याहारः। अचिन्त्यः [13]स्वरव्याहारः। अचिन्त्यः संक्लेशव्याहारः।

1 C रूपवर्णव्याहाराः
2 A, B & Tib. omit the sentence: इति हि कुमार अप्रमेया...व्याहाराः।
3 A & B कुमार अनन्तपर्यन्ता अचिन्त्या
4 C रूपवर्ण०
5 C adds विज्ञानव्याहाराः
6 A drops अप्रमेया
7 A & B संस्कृत० ; C संस्कारे
8 A & B drop अप्रमेया
9 C रूपवर्णाः,
10 A & B निर्वाणस्य
11 B ०ख्येयानि निर्वाणस्य ना०
12 A & B drop अचिन्त्या अचिन्त्यव्याहाराः।
13 Tib. 124a, l. 3: དབྱངས་བརྗོད།

अचिन्त्यो व्यवदानव्याहारः। इमे कुमार चत्वारस्तथागतस्य वर्णव्याहाराः। अचिन्त्या अचिन्त्यव्याहाराः। चत्वार इमे कुमार तथागतस्य वर्णव्याहाराः[1]। अचिन्त्या अचिन्त्य-निर्देशाः। ते न सुकरं पर्यन्तनिष्ठास्थानेन[2] निर्देष्टुम्। कतमे चत्वारः। एष एव चतुष्क[3] एवं विस्तरेण निर्देष्टव्यम्[4]। यदुत

1 A इमे कुमार तथागतस्य वर्णव्या० ; B इमे कुमार तथागतस्य व्या०

2 Tib. 124a, l 2. དེ་དག་མཐར་ཕྱིན་པའི་གནས་སུ་བསྟན་པར་སླ་བ་ནི་མ་ཡིན་ནོ ।=न सुकरं पर्यन्तस्थानेन निर्देष्टुम्। A दर्यन्तस्थानेन ; B पर्यन्तस्य तेन

3 B चतुष्कं

4 A निर्देष्टव्यः ; B ०व्य ; A & B चत्वार इमे कुमार बोधिसत्त्वानां नयाः। कतमे चत्वारः अचिन्त्यसंस्कारनयः। अचिन्त्यः संस्कारपरिभाषानयः। अचिन्त्यसंक्लेशनयः। अचिन्त्यो व्यवदाननयः। इमे चत्वारो नयाः। चतस्र इमाः कुमार बोधिमत्त्वानां युक्तयः। कतमाश्चतस्र.। अचिन्त्या संस्कारयुक्तिः। अचिन्त्या संस्कारपरिभाषायुक्तिः। अचिन्त्या संक्लेश-युक्ति.। अचिन्त्या व्यवदानयुक्तिः। इमाश्चतस्रो युक्तयः। चत्वारीमानि कुमार बोधिसत्त्वानां द्वाराणि। कतमानि चत्वारि। अचिन्त्यं संस्कारद्वारम्। अचिन्त्य संस्कारपरिभाषाद्वारम्। अचिन्त्यं संक्लेशद्वारम्। अचिन्त्य व्यवदानद्वारम्। इमानि चत्वारि द्वाराणि। चत्वार इमे कुमार बोधिसत्त्वानां निर्देशाः। कतमे चत्वारः। अचिन्त्यः संस्कारनिर्देशः। अचिन्त्यः संस्कारपरिभाषानिर्देशः। अचिन्त्यः संक्लेशनिर्देशः। अचिन्त्यः व्यवदाननिर्देशः। इमे चत्वारो निर्देशाः। In this way, the following terms have been mentioned in place of नयाः, युक्तयः, द्वाराणि and निर्देशाः। घोषाः। वाचः। वाक्पथाः। सन्धाभाष्याणि। देवतानिध्यप्तयः। मनुष्यनिध्यप्तयः। नामनिध्यप्तयः। अवताराः। उद्भवाः। वज्रपदानि। मन्त्रपदानि। निर्हाराः। व्यवहाराः। सूत्रान्तपदानि। अचिन्त्यपदानि। अनन्तपदानि। प्रचारपदानि। अपर्यन्तपदानि। असंख्येयपदानि। अप्रमेयपदानि। अपरिमाणपदानि। ज्ञानपदानि। ज्ञानसञ्चयाः। ज्ञानगोत्राणि। प्रतिभानसञ्चयाः। सूत्रान्ताः। सूत्रान्तसञ्चयाः। बाहुश्रुत्यानि। धनानि। सिद्धाः। गोचराः। कर्माणि। प्रतिभानानि। मार्गभावनाः। संक्लेशज्ञानानि। अबन्ध्यज्ञानानि। अविद्याज्ञानानि। दुःखज्ञानानि। दौर्मनस्यज्ञानानि। दारिद्रज्ञानानि। उपपत्तिज्ञानानि। आध्यात्मिकज्ञानानि। बहिर्द्धाज्ञानानि। ह्रीज्ञानानि। सत्यज्ञानम्। भवज्ञानानि। वस्तुज्ञानानि। पुद्गलज्ञानानि। चत्वारोमानि कुमार बोधिसत्त्वानामुपलम्भज्ञानानि। कतमानि चत्वारि। अचिन्त्यं संस्कारोपलम्भज्ञानम्। अचिन्त्यं संस्कारपरिभा

चत्वारो बोधिसत्वानां[1] नयाश्चतस्रो युक्तयश्चत्वारो द्वाराश्चत्वार निर्देशाश्चत्वारो घोषाश्चत्वारो वचनपथाश्चत्वारो व्याहारा-श्चत्वारि सन्धाभाष्याणि[2] चतस्रो[3] नामनिध्यप्तयः। चतस्रो मनुजनिध्यप्तयः। चत्वारि प्रतिवचनानि। चत्वारि द्वाराणि। चत्वार्यक्षराणि। चत्वारोऽवतारा:[4]। चत्वारः पदाः[5]। चत्वारि निर्हारपदानि। चत्वारः सूत्रान्तपदाः[6]। चत्वारश्चर्या-पथाः[7]। चत्वारोऽचिन्त्यपथाः। चत्वारः तुल्यपथाः। चत्वारोऽनन्तपथाः। चत्वारोऽपर्यन्तपथाः[8]। चत्वारोऽसंख्येय-पथाः। चत्वारोऽप्रमेयपथाः। चत्वारोऽपरिमाणपथाः। चत्वारि[9] ज्ञानानि। चत्वारो ज्ञानसञ्चयाः। चत्वारि ज्ञानगोत्राणि। चत्वारि प्रतिभानानि[10]। चत्वारः प्रतिभानसञ्चयाः। चत्वारि प्रतिभानगोत्राणि। चत्वारः सूत्रान्तसञ्चयाः। चत्वारि प्रतिभान-

लम्भज्ञानम्। अचिन्त्यं संक्लेशोपलम्भज्ञानम। अचिन्त्यं व्यवदानोपलम्भज्ञानम्। इमानि चत्वार्युपलम्भज्ञानानि। अचिन्त्यान्यचिन्त्यनिर्देशानि न सुकरं पर्यन्तस्थानेन निर्देष्टुम्।

1 Tib. 123a, l. 6. གཞན་ཡང་འདི་དག་ནི་ བྱང་ཆུབ་སེམས་དཔའ་རྣམས་ཀྱི་ཚུལ་བཞི་སྟེ །

2 C सत्त्वाभा०

3 A & B add देवतानिध्यप्तयश्चतस्रो

4 C चत्वारि वतया

5 C चत्वारि मदाः

6 B चत्वारि सूत्रान्तपथाः ; चत्वार ईर्यापथाः ; C सूत्रान्तपथाः

7 A ईर्यापथाः

8 A adds चत्वारि निर्हारपदानि। चत्वारः सूत्रान्तपदाः। चत्वार ईर्यापथाः। चत्वारोऽचिन्त्यपथाः। चत्वारो तुल्यपथाः। चत्वारोऽनन्तपथाः। चत्वारो पर्यन्तपथाः।

9 B चत्वारो

10 C drops चत्वारि प्रतिभानानि।

करणानि[1]। चत्वारः सूत्रान्तनिर्हाराः। चत्वारि बाहुश्रुत्य-गोत्राणि[2]। चत्वारि बुद्धधनानि[3]। चतस्रो बोधिसत्त्वशिक्षाः। चत्वारो बोधिसत्त्वगोचराः। चत्वारि[4] बोधिसत्त्वकर्माणि। चत्वारि बोधिसत्त्वप्रतिभानानि[5]। चतस्रो मार्गभावनाः। चत्वारि क्लेशप्रहाणानि। चत्वार्यपायजहानानि[6]। चत्वार्य-ज्ञानविधमनानि। चत्वार्यविद्याप्रहाणानि। चत्वारि दुःखो-पशमनानि। चत्वारि दौर्मनस्यप्रहाणानि। चत्वार्युपाय-संजननानि। चत्वारि दृष्टिप्रहाणानि। चत्वार्युपपन्नपरिज्ञानानि[7]। चत्वार्यात्मदृष्टिप्रहाणानि। चत्वारि सत्त्वदृष्टिप्रहाणानि। चत्वारि जीवदृष्टिप्रहाणानि। चत्वारि पुद्गलदृष्टिप्रहाणानि। चत्वारि भवदृष्टिप्रहाणानि[8]। चत्वारि वस्तुप्रहाणानि[9]। चत्वा-र्युपलम्भदृष्टिप्रहाणानि। [ते न सुकरं पर्यन्तस्थानेन निर्देष्टुम्]

चतस्रो धारण्यः[10]। कतमाश्चतस्रः। यदुतानन्तः [सर्व][11]-संस्कारपरिभाषाव्याहारः। तत्र यज्ज्ञानमियं प्रथमा धारणी।

1 A ०कारणानि

2 C बाहुश्रुतिगो०

3 B बुद्धधर्माणि

4 B चत्वारो

5 C प्रतिष्ठानानि

6 C ०पायजहानि

7 A ० र्य्युपपत्तिपरि०

8 A चत्वारि भवदृष्टिप्रहाणानि। चत्वारि विभवदृष्टिप्रहाणानि। B drops चत्वारि भवदृष्टिप्रहाणानि

9 A & B drop चत्वारि वस्तुप्रहाणानि

10 A drops it.

11 Tib, 133a, l. 1: དུ་བྱེད་ཐམས་ཅད །

अनन्तः [स्वर]परिभाषाव्याहारः। तत्र यज्ज्ञानमियं द्वितीया धारणी। अनन्तः संक्लेशपरिभाषाव्याहारः। तत्र यज्ज्ञान[1]-मियं तृतीया धारणी। अनन्तोः[2] व्यवदानगुणानुशंसाव्याहारः। तत्र यज् ज्ञानमियं चतुर्थी धारणी। इमाश्चतस्रो धारण्यः। इति हि या कुमार धारणी[3] तज्ज्ञानं स धर्मः। इति हि धर्म-ज्ञानेन धर्मप्रतिसंवित्।

धर्मज्ञाने योऽर्थः[4]। इयमुच्यते अर्थप्रतिसंवित्। धर्मज्ञाने यच्छन्दः[5]। इयमुच्यते निरुक्तिप्रतिसंवित्। धर्म-ज्ञाने या[6] व्यवहारदेशना। आचक्षणा। प्रज्ञपना। प्रका-शना। प्रस्थापना। विचरणा। विभजना। उत्तानी-करणता[7]। असक्तवचनता। अनेला मूकवचनता[8]। अनवलीन-वचनता। अयमुच्यते[9] प्रतिभानप्रतिसंवित्।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

यात्तकं[10] ज्ञानु बुद्धस्य रूपप्रज्ञप्ति तात्तिका[11]।
यावती रूपप्रज्ञप्ति रूपव्याहार तात्तका[12] ॥१॥

1 B तत्र यज्ज्ञान० 2 B अनन्ते ; C अनन्त०
3 B इति हि कुमार या धरणी न ज्ञानं ; C हि कुमार णी तज्ज्ञानं
4 A धर्मज्ञानेव योर्थः ; B धर्मज्ञानेन योर्थः
5 B इयमुच्यते प्रतिसंविद्धर्मज्ञानेन यच्चन्दं ; Tib. 133a, l. 5: འདུན་པ །
6 A & B ०ज्ञानेन या 7 C ०करणा
8 A अनेनामूकवचनता ; B अनेलामुकवचनता
9 A & B इयमुच्यते कुमार 10 A ज्ञात्तकं ; C यान्तकं
11 C तान्तिका 12 C तान्तिका

[यावन्तो रूपव्याहाराः शीलनामानि तात्तकाः ।
यावन्ति शीलनामानि बुद्धनामानि तात्तकाः ॥२॥
यात्तका बुद्धनामानि[1] सत्त्वनामानि तात्तकाः] ।
एत्तकान्येकसत्त्वस्य अहं नामानि[2] जानमी[3] ॥३॥
अनन्ता नामव्याहारा ये मे पूर्वं प्रकाशिताः ।
शीलनामा बुद्धनामा सत्त्वनामा च ते समाः[4] ॥४॥
यात्तकाः संस्कृते दोषा निर्वाणे तात्तका गुणाः ।
बुद्धस्य तात्तका वर्णा औपम्या[5] मे प्रकाशिताः ॥५॥
यात्तकाः सर्वसत्त्वानां चित्तोत्पादा निदर्शिताः ।
तात्तका लोकनाथस्य एकरोमात रश्मयः[6] ॥६॥
नामाश्च[7] अधिमुक्तिश्च सर्वसत्त्वान यात्तिकाः ।
ततो भूयो नरेन्द्रस्य स्वराङ्गवर्ण[8] भाषिताः[9] ॥७॥
ये नामाः सर्वसत्त्वानामेकसत्त्वस्य[10] दर्शिताः ।
एकसत्त्वस्य ये[11] नामाः सर्वसत्त्वान दर्शिताः ॥८॥
प्रतिसंविदानामोत्तार[12] अयं बुद्धेन देशितः ।
अनन्त नामनिर्देशा बोधिसत्त्वान कारणात् ॥९॥

1 A & B ॰नामस्य 2 B अहन्नामानि 3 C जानामि
4 B बुद्धनामाश्च ते समाः 5 C वापम्या
6 Tib. 133b, l. 6: སྤུ་གཅིག་ནས་འོད་ཟེར་དག་ཀྱང་།
7 C नामा च
8 Tib. 133b, l. 7: དབྱངས་ཀྱི་ཡན་ལག་བསྔགས་པ་མང་།
9 B omits last line of stanza 6 and stanza 7.
10 B & C ॰मेकासत्त्वास्य 11 C drops ये
12 A ॰विदानमोत्तारस्त्वयं ; B विदान मातारः ; Tib. 134a, l. 1: འཇུག་པ། =प्रवेश ।

य इच्छेत् कथं भाषेय्या सूत्रकोटीरनन्तिकाः[1] ।
इदं सूत्रं प्रवर्तित्वा[2] अनोलीनः प्रकाशयेत् ॥१०॥
असक्तः[3] परिषन्मध्ये सूत्रकोटीः[4] प्रभाषते ।
यथाकाशमपर्यन्तमेवं धर्मं स[5] भाषते ॥११॥
एमेव बोधिसत्त्वानां शुद्धसत्त्वान[6] तायिनाम् ।
इदं सूत्रं समुद्गृह्य भवन्ति[7] ज्ञानसम्पदाः ॥१२॥
यथा यथा प्रकाशेति श्रद्दधन्तो[8] इमं नयम् ।
तथास्य वर्धते ज्ञानं हिमवन्तेव पादपाः[9] ॥

[ इति श्रीसमाधिराजे[10] तथागताचिन्त्यनिर्देश-
परिवर्तस्त्रयोविंशतितमः[11] ॥२३॥ ]

1 A भाषेय्या सूत्रकोटीरचिन्तिया ; B भाषेय्या सूत्रकोटीरचिन्तियाः ; C भाष्येय
2 B प्रवर्त्तत्वा
3 B अशक्तः
4 A पर्षन्मध्येषु सूत्र० ; B & C ०कोट्यः
5 A धर्माण ; B धर्माण न
6 A & B सर्वसत्त्वान
7 C भवति
8 A श्रद्दधाना ; B प्रकाश्येछि श्रद्दधाना
9 A & C पादवाः
10 B drops इति समाधिराजे
11 A ०तिमः

# चतुर्विंशपरिवर्तः

तत्र कुमार कथं बोधिसत्त्वो महासत्त्वो धर्मप्रतिसंविदि चरन्[1] धर्मेषु धर्मानुपश्यी[2] समुदागच्छत्यनुत्तरायां सम्यक्-संबोधौ। इह[3] कुमार बोधिसत्त्वो महासत्त्वो धर्मेषु[4] धर्मानुपश्यी[5] नान्यत्र रूपेण बोधिं समनुपश्यति। [नान्यत्र रूपाद्बोधाय चरति। नान्यत्र रूपेण बोधिं पर्येषते।] नान्यत्र रूपेण बोधाय समुदागच्छति। नान्यत्र रूपेण सत्त्वानि बोधाय समादापयति[6]। नान्यत्र रूपेण तथागतं[7] पश्यति। रूपस्या[8][विनाश]स्वभावः [तथा-गत] इति तथागतं[9] पश्यति। अन्यद् रूपमन्यो[10] रूपस्वभाव इति नैवं पश्यति। अन्यो रूपस्वभावोऽन्यस्तथागत इति नैवं पश्यति। यश्च [11]रूपस्वभावो यश्च तथागत इत्यद्वयेयं धर्मता। एवं पश्यन् बोधिसत्त्वो[12] महासत्त्वश्चरति [13]धर्मप्रतिसंविदि[14]। एवं नान्यत्र वेदनाया नान्यत्र संज्ञाया नान्यत्र[15] संस्कारेभ्यो नान्यत्र [विज्ञानेन बोधिं समनुपश्यति। नान्यत्र] विज्ञानाद्बोधाय चरति।

1 B ॰प्रतिसम्बिदचरत्वं 2 B ॰पसी 3 C इमा
4 C धर्मेण 5 B ॰नुपश्वी
6 B समुदा॰ 7 B ॰गत 8 B न रूपस्या॰
9 A ॰स्वभावस्तथागत इति तथा॰ ; B विनाशधर्मस्वभावस्तथागत इति तथागत
10 A & B अन्यत्र रूपमन्यो
11 C यश्चान्य 12 C omits बोधिसत्त्वो महासत्त्व॰
13 A & B drop धर्म॰ 14 B ॰विद 15 B ॰याः अन्यत्र

नान्यत्र विज्ञानेन बोधिं पर्यैषते। नान्यत्र विज्ञानेन बोधाय समुदागच्छति[1]। नान्यत्र विज्ञानेन सत्त्वानि बोधाय समादापयति[2]। नान्यत्र विज्ञानेन तथागतं पश्यति[3]। विज्ञानस्या-[विनाश]स्वभावस्तथागत[4] इति तथागतं पश्यति। अन्यद्विज्ञान-मन्यो[5] विज्ञानस्वभाव इति नैवं पश्यति। अन्यो विज्ञानस्वभावो-ऽन्यस्तथागत इति नैवं पश्यति। यश्च विज्ञानस्वभावो यश्च तथागत इत्यद्वयेयं धर्मता[6]। एवं पश्यन् बोधिसत्त्वो महासत्त्वश्चरति धर्मप्रतिसंविदि[7]।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

रूपेण दर्शिता बोधी बोधये[8] रूप दर्शितम्[9]।
विसभागेन[10] शब्देन उत्तरो धर्म देशितः ॥१॥

शब्देन उत्तरं[11][रूपं] गम्भीरं च स्वभावतः।
समं रूपं च बोधिश्च नानात्वं नास्य[12] लभ्यते ॥२॥

यथा निर्वाण गम्भीरं शब्देनासंप्रकाशितम्[13]।
लभ्यते न च निर्वाणं स च शब्दो न[14] लभ्यते ॥३॥

1 A समनुगच्छति 2 B समुदापयति 3 A & B समनुपश्यति
4 A विज्ञानस्याविनास्वभाव० ; B विज्ञानस्याविनाशस्वभाव०
5 B अन्यत्र विज्ञानमन्योन्य० 6 B इत्ययेमध०
7 B धर्मप्रतिशम्बिदति ; C ०प्रतिसम्पदित
8 C रूपेणादर्शिता बोधिर्बोधये ; B रूपेण दर्शिता बोधी बोधीये
9 B दर्शिताम् 10 C विषभा० ; B विसभागेण
11 A उत्तमं ; B उत्तम०
12 A नाना चेतस न ; B समरूपश्च बोधिसत्त्वाश्च नानात्व स न
13 B शब्देनोसंप्रका० ; C ०शिता 14 B शब्देन

शब्दश्चाप्यथ निर्वाणमुभयं तन्न लभ्यते ।
एवं शून्येषु धर्मेषु निर्वाणं संप्रकाशितम् ॥४॥
निर्वाणं निर्वृती वुत्ता[1] निर्वाणं च न लभ्यते[2] ।
अप्रवृत्त्यैव धर्माणां[3] यथा पश्चात्तथा पुरा ॥५॥
सर्वधर्माः स्वभावेन निर्वाणसमसादृशाः ।
ज्ञाता नैष्क्रम्यमानेहि[4] ये युक्ता बुद्धशासने ॥६॥
पश्यित्वा[5] कायु बुद्धस्य वक्ष्यन्ते दृष्टु नायक[6] ।
न चाहं रूपकायेन पश्यितुं शक्य केनचित्[7] ॥७॥
ज्ञातः[8] स्वभावो रूपस्य यादृशं[9][रूपलक्षणम्] ।
रूपस्वभावमाज्ञाय कायो[10] मम निदेशितः ॥९॥
एवं पश्चान स्कन्धानां ज्ञानं[11] मे धर्मलक्षणम् ।
ज्ञात्वा[12] स्वभावं[13] धर्माणां धर्मकाये प्रतिष्ठितः ॥१०॥
देशेमि[14] धर्म सत्त्वानां धर्मकायेऽप्यनिःसृतः ।
न च धर्मत बुद्धानां शक्यं वाचाय भाषितुम् ॥११॥

1 C निर्वाण निर्वृती वुन्तं ; B ॰निर्वृती चूभा
2 B निर्वाण लभ्यते
3 B ॰वृत्तेषु धर्मेषु ; C ॰वृत्य स धर्माणां
4 A & B सारेहि
5 A पश्यत्वा ; B यस्मिन् वा काय
6 A द्रष्टु नायकः ; B वक्ष्यते दुष्ट नायकः
7 C शक्यते न चित्
8 C ज्ञान॰
9 B रूपश्च यादृशः
10 C कामो
11 A ज्ञातं
12 C ज्ञातं
13 B स्वभावान्
14 A & B add देशेमि धर्म सत्त्वानां धर्मकाये प्रतिष्ठितः ।

इमं नयमजानन्तो बुद्धशब्दं श्रुणित्व ते[1] ।
घोषमात्रेण वक्ष्यन्ति दृष्टो मे [नर]नायकः[2] ॥१२॥
सर्वसंज्ञाप्रहीणस्य[3] भवसंज्ञा विगच्छति ।
न जातु शब्दसंज्ञस्य[4] भवते शास्तृदर्शनम् ॥१३॥
यः शून्यतां प्रजानाति ईदृशं रूपलक्षणम् ।
न चान्या[5] शून्यता उक्ता अन्या रूपस्वभावता ।
यस्तु[6] रूपं प्रजानाति स प्रजानाति शून्यताम् ॥१४॥
यः शून्यतां प्रजानाति ईदृशं रूपलक्षणम् ।
न चासौ मारकोटीभिर्भूयः शक्यं पराजितुम् ॥१५॥
प्रजानाति [हि][7] यो रूपं स प्रजानाति शून्यताम् ।
यः शून्यतां प्रजानाति स प्रजानाति निर्वृतिम् ॥१६॥
इमां गतिमजानन्तः[8] प्रनष्टा औपलम्भिकाः ।
अभावे भावसंज्ञेयो[9] भावे चाभावसंज्ञिनः ॥१७॥
वञ्चिता [10]ज्ञात्रलाभेन प्रनष्टा मम शासनात् ।
फलसंज्ञा अवस्थाने[11] रिक्ता श्रामणकाद्धनात्[12] ॥१८॥

1 A श्रृणोथ मे ; B बुद्धशब्दा श्रृणोतुम् 2 B ०नायकाः

3 C adds भवसंज्ञा प्रहीणस्य 4 A ०संज्ञास्य

5 C न वास्या 6 C यस्त्व०

7 A & B drop हि 8 B गतिमाज्ञा० 9 A ०संज्ञीयो

10 Tib. 136a, l. 5: ཤེས་ཀྱི་ཁེ་ཡིས་བསླུས་པ་དག །

11 A ०संज्ञी च अस्थाने ; B ०संज्ञीव अस्थाने ; Tib. 136a, l. 6: འབྲས་བུར་དུ་ཤེས་གནས་མ་ལ །

12 A अक्ता श्रामण्य० ; B अक्ता स्रामण्य० ; C श्रावणकाद्धनात्

कुसीदा हीनवीर्याश्च शीलस्कन्धे असंस्थिताः ।
पर्युत्थिताश्च[1] वक्ष्यन्ति न एतद् बुद्धशासनम्[2] ॥१९॥
केचिदेवं प्रवक्ष्यन्ति वयं बोधाय प्रस्थिताः ।
अदान्ता अविनीताश्च परस्परमगौरवाः ॥२०॥
शब्दकामा भविष्यन्ति धर्मे चैवानवस्थिताः[3] ।
एवं सा भेष्यते इच्छा ज्ञात्रलाभगवेषणे[4] ॥२१॥
लाभकामा भविष्यन्ति सन्निपाते हि चिन्तकाः[5] ।
मदप्रमादाभिभूता लाभसत्कार अर्थिकाः ॥२२॥
निःसृता[6] लाभसत्कारे ज्ञात्रलाभगवेषिणः ।
स्तूपान् विहारान् काहेन्ति[7] कुलस्त्री[ष्व]धिमूर्च्छिताः ॥२३॥
निःसृता[8] श्चोपलम्भस्मिन् कामतृष्णासु निःसृताः[8] ।
गृहिकर्म करिष्यन्ति मारस्य विषये स्थिताः ॥२४॥
गृहिणां[9] देश[यि]ष्यन्ति कामा अग्निशिखोपमाः[10] ।
प्रविश्य च गृहांस्तेषां[11] दूषयिष्यन्ति तान् कुलान्[12] ॥२५॥

1 Tib. 136a, l. 7 : ཀུན་ནས་ལྡང་བས་སྨྲ་བ་ནི །
2 A ०भाषितम् ; B वक्ष्यन्ति एतद् बुद्धभाषितम्
3 A धर्मेष्वेवानव०
4 A drops this stanza ; B लाभगवेषणु
5 B चिन्तिका
6 A & B निश्रिता
7 A काहिन्ति
8 A निश्रिता०
9 A & B गृहीणां
10 A कामानग्निशिखोपम' ; B कामानग्निशिखोपमान्
11 B गृहीस्तेषां
12 A तत्कुलान् ; B तां कुलान्

गृहिणश्च[1] भविष्यन्ति तेषु शास्तारसंज्ञिनः ।
तेषाञ्च विप्रवुस्तानां[2] पुत्रदाराणि दूषयी ॥२६॥
ये तेषामन्नपानेन करिष्यन्ति अनुग्रहम् ।
तेषां ततपुत्रदारेषु भार्यासंज्ञा भविष्यति ॥२७॥
गृहिणो[3] न स्वदारेषु भविष्यन्त्यधिमूर्च्छिताः ।
यथा ते प्रव्रजित्वा हि[4] परदारेषु मूर्च्छिताः ॥२८॥
शिक्षा वदातवस्त्राणं[5] गृहिणं या मि दर्शिताः ।
सा[6] शिक्षा तेषां भिक्षूणां[7] तस्मिन् काले न भेष्यति[8] ॥२९॥
भेरीशङ्खमृदङ्गेहि पूजां काहेन्ति[9] ते मम ।
या च सा उत्तमा पूजा प्रतिपत्तिर्न भेष्यति ॥३०॥
ते आत्मना सुदुःशीला दृष्ट्वा शीलप्रतिष्ठितान्[10] ।
अन्योन्यमेवं वक्ष्यन्ति एतेऽपि[11] यादृशा वयम् ॥३१॥
श्रुत्वा शीलस्य ते वर्णं[12] दुःशीलाः पापगोचराः ।
पर्युत्थिताश्च वक्ष्यन्ति [13]नैवैतद्बुद्धभाषितम् ॥३२॥

1 A & B गृहीणश्च
2 A विप्ररस्मनां, B विरुस्थानां;
Tib.136b, l. 5: རབ་ཏུ་གནས་བཅས་དེ་དག་གི །
3 A & B गृहीणो
4 A & B ०जित्वेह
5 A शिक्षावदात वस्तानां गृहीणां ; B शिक्षावदावन्त्राणा गृहीणां चामिदा०
6 A या
7 A तेषु भिक्षूणी ; B तेषु भिक्षूणां
8 C भविष्यति
9 A & B काहिन्ति
10 A दृष्ट्वा शीलप्रतिष्ठिताम्
11 C ह्री
12 B वर्चा
13 B न चैतद्ब०

न च ह्री भेष्यते[1] तेषां नष्टं श्रामणकं[2] धनम् ।
चोदिताभूतवाचाया बुद्धबोधिं प्रतिक्षिपि ॥३३॥
तेषां व्यापन्नचित्तानामुत्सृष्ट्वा[3] बुद्धशासनम् ।
धर्मं प्रतिक्षिपित्वा च वासोऽवीचौ भविष्यति[4] ॥३४॥
न मे श्रुतश्च[5] दृष्टं वा येषामेतादृशी चरी ।
ते बुद्धज्ञानं लप्स्यन्ते[6] [7]बालधर्मप्रतिष्ठिताः ॥३५॥
या [ तेषां ] कुहना तत्र शाठियं [वाक्कियं] तदा[8] ।
जानामि तदहं सर्वं ज्ञानं मेऽत्र प्रवर्तते ॥३६॥
स चेत् कल्पं प्रभाषेयं यत्तेषां[9] स्खलितं पृथु ।
बोधिसत्त्वप्रतिज्ञानां[10] किञ्चिन्मात्रं प्रकीर्तितम् ॥३७॥
[ नास्ति ] पापमकर्तव्यं कुमारा तेष भेष्यति ।
मा तेहि संस्तवं सार्धं कुर्यास्त्वं[11] कालि पश्चिमे ॥३८॥
आलपेत् संलपेय्यासि कुर्यासी तेषु गौरवम्[12] ।
अनोलीनः सत्करेय्यासि अग्रबोधीय[13]कारणात् ॥३९॥

1 C तेप्यते; Tib. 137a, l. 3: དེ་དག་ལ་ནི་ངོ་ཚ་མེད། ।
2 A & B नष्टश्रावरायकं ; C श्रावराकं
3 B व्यापन्नचित्तामुत्०
4 B धर्मप्रतिक्षिपीत्वा च ह्रासोऽवीचौ ; C वासौ वीचिर्भविष्यति
5 A श्रुतं वा ; B श्रुतस्व 6 B लप्स्यन्ति 7 C पाल०
8 A शाठिया वाक्कियं तथा ; B साठिया वार्क्कियत्तथा
9 B प्रभाषेय तेषाणं
10 Tib. 137a, l. 7: ཁས་འཆེ་ཡི་ཙུང་ཟད་ཙམ་ཞིག ।
11 A कुर्यात् त्वं
12 A कुर्याशीत्तेषु गोर० ; B ०ष्याणि कुर्यासीत्तेषु गोचरं
13 B सत्करेष्यसि अग्रबोधीय

वर्षाग्रं परिपृच्छित्वा यस्ते वृद्धतरो भवेत् ।
कुर्या हि[1] गौरवं तत्र शिरसा पादवन्दनम् ॥४०॥
न तेषां स्खलितं पश्येद्बोधिमण्डविपश्यताम्[2] ।
प्रतिघातं[3] न जनयेत्[4] मैत्रचित्तः सदा भवेत् ॥४१॥
यद्येषां स्खलितं पश्येद्दोषांस्तेषां[5] न कीर्तयेत् ।
यादृशं काहिती कर्म लप्स्यते तादृशं फलम्[6] ॥४२॥
स्मितेन मुखचन्द्रेण वृद्धेषु नवकेषु च ।
पूर्वाभाषी[7] भवेन्नित्यं हतमानश्च सूरतः ॥४३॥
चीवरैः पिण्डपातैश्च कुर्यास्तेषामनुग्रहम्[8] ।
एवं चित्तं प्रदध्यास्त्वं सर्वे भेष्यन्ति नायकाः ॥४४॥
अध्येष्ये[युर्यदि त्वान्ते ध]र्मदानस्य कारणात् ।
प्रथमं वाचं भाषेय्या 'नाहं वैपुल्यशिक्षितः'[9] ॥४५॥
एवं त्वं वाच भाषेय्या 'आयुष्मान् विज्ञपण्डितः[10] ।
कथं महात्मना शक्यं पुरतो भाषितुं [मया'] ॥४६॥
सहसैषां न[11] जल्पेत तुलयित्वा च भाजनम् ।
यदि भाजनं[12] विजानीया अनधीष्टो पि देशयेत् ॥४७॥

1 A & B कुर्यासि　　2 A & B विपश्यता
3 C ०पातं　　4 B जनये
5 A ०द्दोषास्तेषां ; B दोषात्तेषान्न ; C नैषां　　6 A & B तादृशं लप्स्यते फलम्
7 A पूर्वालापी　　8 A खण्डपातैश्च कुर्यात्तेषा० ; B पिण्ढपातैश्च कुर्याते०
9 B नोह वै पुण्यशिक्षता ; C शिक्षितोः ; Tib. 137b, l. 6 : མཚུངས་མེད། ।
10 A युष्मारो विज्ञपण्डिताः ; B एवं त्व वाच भाषेष्यायुष्मा च विज्ञपण्डिताः
11 A सहस्तेषां न ; B सहसैषान्न
12 A भाजनु विजानीयादनधिष्ठायि देशय. ; B भाजन विजानीयानधिष्टापि देशयेः

यदि दुःशील[1] पश्येसि परिषायान् बहुस्थितान्[2] ।
संलेखं मां प्रभाषेस्त्वं वर्णं दानस्य कीर्तयेत्[3] ॥४८॥
भवेयुर्यदि वाल्पेच्छाः शुद्धाः शीले प्रतिष्ठिताः ।
मैवं चित्तं जनित्वा त्वं कुर्या संलेखिकीं कथाम्[4] ॥४९॥
परीत्ता यदि पापेच्छा शीलवन्तो बहू भवेत् ।
लब्धपक्षस्तदा भूत्वा वर्णं[5] शीलस्य कीर्तयेत्[3] ॥५०॥
पूर्वं परिषदं[6] ज्ञात्वा यदि शुद्धा भवेत् तदा ।
यावन्तः कुशला धर्माः सर्वांस्तेभ्यः प्रकाशयेत्[7] ॥५१॥
दानं शीलं तथा क्षान्तिं वीर्यं ध्यानं श्रुतं तथा ।
सन्तुष्ट्यल्पे[च्छ] संलेखान् वर्णयेत् कीर्तयेत् सदा ॥५२॥
अरण्यवासं ध्यानसुखं गणवासविवर्जनम् ।
एतेषां वर्णं भाषेत एवं हि धारयेत् सुखम्[8] ॥५३॥
अरण्यवास[9] नो रिंचेन्न शीलपरमो भवेत् ।
प्रतिसंलानु[10] सेवेत [न] दानपरमो भवेत् ॥५४॥
शीलस्कन्धे स्थिहित्वा च बाहुश्रुत्यमुपार्जयेत् ।
इमं समाधिमेषन्तः पूजयेच्छास्तृधातवः ॥५५॥

1 A दुःशीलान् ; B यदि दुःशीलां
2 A पर्षाया च बहून् स्थितान् , B येषायां बहुस्थितां
3 A कीर्तये ; B कीर्तयेः
4 A कुर्यात् संलेखिकी कथा ; B मैत्रचित्तं जनित्वा त्वत् कुर्यात् संलेखकी कथां
5 A वर्णं ; B लधूपक्षस्ता भूत्वाव० 6 B पूर्वम्पर्षदं ; C पूर्वं पर्षदं
7 A सर्वास्तेभ्यः प्रकाशयेः ; B सर्वस्तेभ्यः प्रकाशयेः
8 A एतद्विधारणीमुखम् ; B एतद्धारणीये सुखम् 9 C अरण्यवासतो
10 C प्रतिसंलापु ; see Tib. 138a, l. 7.

छत्रैर्ध्वजैः पताकाभिर्गन्धमाल्यविलेपनैः ।
कारयेत् पूज[1] बुद्धस्य समाधिं शान्तमेषता ॥५६॥
रञ्जनीयेहि तूर्येहि[2] संगीतिं सम्प्रयोजयेत् ।
पूजयेद्धातुं बुद्धस्य अनोलीनो अतन्द्रितः[3] ॥५७॥
यावन्ति गन्धमाल्यानि धूपनं चूर्णचैलिकम्[4] ।
सर्वैस्तैः पूजयेन्नाथं बुद्धज्ञानस्य कारणात्[5] ॥५८॥
यावती काचित् पूजास्ति अप्रमेया[6] अचिन्तिया ।
कुर्यास्ताः सर्वबुद्धानां समाधिं शान्तमेषता ॥५९॥
प्रत्यंशं सर्वसत्त्वेभ्यः समं दद्यादनिःश्रितः[7] ।
असङ्गज्ञानमेषन्तो बुद्धज्ञानमनुत्तरम् ॥६०॥
मयापि पूर्वबुद्धानां कृता[8] पूजा अचिन्तिया[9] ।
अनिःश्रितेन भूत्वैनं[10] समाधिं शान्तमेषता ॥६१॥
बुद्धोत्पादोऽपि दुर्लभो दुर्लभो मानुषो भवः[11] ।
दुर्लभा शासने श्रद्धा प्रव्रज्या उपसंपदा[12] ॥६२॥

1 B पूज ये 2 A रञ्जनीयैस्तूर्येभिः ; B रञ्जनीयेहि तूयेहि

3 A ०द्धातु बुद्धस्यानवलीनो अतकृता ; B इमं समाधि पूजयेद्धातुबुद्धस्य अनोलीनो अतन्त्रितः । 4 A चूर्णलेपिकम्

5 A ०न्नाथं अबोधीय कारणात् ; B पूजयं नाथमबोधीयकारणात्

6 B यावती काचि पूजयन्ति अप्रमेया अचिन्तिया ; C यावती पूर्वबुद्धानां कृता पूजा अचिन्तिया

7 A सर्वं दद्यादनिश्रितः ; B प्रत्यंसं सर्वसत्तेभ्यः सम दद्यादनिश्रितः

8 A कृत्वा ; B पूर्वबुद्धानां कृता 9 A & B अनुत्तरा

10 A & B भूत्वेमं ; C अनिःस्तृतेन

11 A & C दुर्लभोत्पादु बुद्धानां दुर्लभो मानुषोद्भवः 12 A प्रव्रज्य उप०

येन आरागितः शास्ता चित्तं बोधाय नामितम् ।
मा चल त्वं प्रतिज्ञायास्तिष्ठ[1] च प्रतिपत्तिषु ॥६३॥
य इदं[2] धारयेत् सूत्रं क्षयकाले उपस्थिते ।
प्रतिभानं लभेत्[3] क्षिप्रं प्रवृत्तं[4] यदि धारयेत् ॥६४॥
एकगाथां पि धारित्वा पुण्यस्कन्धो अचिन्तियः ।
किं वा पुनः सर्वसूत्रं धारयेद् यः श्रुतार्थिकः ॥६५॥
सर्वसत्त्वान् बोधिप्राप्तान्[5] पूजयेद् यो ह्यतन्द्रितः[6] ।
यः कुर्याद् गौरवेणासौ कल्पसत्त्वोपमान्[7] सदा ॥६६॥
इतः[8] समाधितो यश्च गाथामेकांपि[9] धारयेत् ।
सर्वं पुरिमकं पुण्यं कलां नोपैति षोडशीम्[10] ॥६७॥
अचिन्तियानानुशंसान्[11] बुद्धज्ञानेन जानमि[12] ।
इमं समाधिं श्रुत्वेह यः कांक्षां न[13] करिष्यति ॥६८॥

[ इति श्रीसमाधिराजे[14] प्रतिसंविदावतारपरिवर्तो नाम चतुर्विंशतितमः ॥२४॥ ]

1 B प्रतिज्ञानात् ; Tib. 138b: དམ་བཅས་པ་ཐོབ་པར་ མ་གཡོ་བར །
2 A इमं ; B इमां
3 C भवेत्
4 Tib. 138b, l. 7: རབ་ཏུ་བརྗོད་པ །
5 B °सत्त्वां बोधिप्राप्तां
6 B यो अतन्द्रितः
7 B & C कल्पा स्वप्नोपमां ; Tib. 139a, l. 2: བསྐལ་པ་སེམས་ཅན་སྙེད་དུ་ཡང །
8 A इति ; B इत
9 A °मेकापि ; B गाथमेकापि
10 B सर्वपुरिमकं पुण्यं करान्नोपाति षोडशी
11 A °मनुशंसां ; B अचिन्तियाननुशंसा
12 B बुद्धज्ञान जानामि
13 B यः काक्ष
14 B drops श्रीसमाधिराजे

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ।

सर्वे मम ज्ञातय एत[1] सत्त्वाः
यस्तेषमस्ती[2] पृथुपुण्यस्कन्धः ।
रात्रेस्त्रिरेवं दिवसस्य च त्री-
रनुमोदमी एमु[3] जनित्व चित्तम् ॥१॥

अनुमोदमी ये सुविशुद्धशीला
ये जीवितार्थे [न करो]न्ति पापम् ।
अधिमुक्तिसम्पन्न य बोधिसत्त्वा
अनुमोदमी तेष य[4] किञ्चि पुण्यम् ॥२॥

अनुमोदमी येष प्रसादु[5] बुद्धे
धर्मे प्रसादोऽस्ति तथैव सङ्घे ।
अनुमोदमी ये सुगतस्य पूजां
कुर्वन्ति बोधिं प्रतिकाङ्क्षमाणाः[6] ॥३॥

1 Mss. एति , Tib. 139a, l. 5.

2 A यस्तस्य ; B यस्तिपे अस्त ; C यस्तेसमस्ती

3 A रात्रदिचेवं दिवसस्य च त्रीननुमोदमी एष ; B च त्रीननुमोदमी एष

4 C तस य

5 C येस प्रसाद

6 A & Tib. add:—

अनुमोदमी ये हि अनुत्तरायां उतपादितं चित्तु वराग्रबोधये ।
सत्त्वान अर्थाय महामतीनां संबोधिवंशस्य च स्थित्य हेतोः ॥
अनुमोदमी ये धनधान्यरत्नांस्त्यजन्ति अन्तःपुर धीतपुत्रान् ।
राज्यं च स्फीतं तथ आत्ममान्यं करुणाय आवेशित बोधिसत्त्वाः ॥
अनुमोदमी ये त्यजि आत्मभावं सत्त्वान अर्थाय प्रहृष्टचित्ताः ।
प्रज्ञाय परिभावित दान्तकाया उपायकौशल्य सुशिक्ष शिक्षिताः ॥

अनुमोदमी येष न आत्मदृष्टि-
र्न भावदृष्टिर्न च जीवदृष्टिः ।
अनुमोदमी येष न पापदृष्टि-
र्ये शून्यतां दृष्ट्व[1] जनेन्ति तुष्टिम् ॥४॥

अनुमोदमी ये सुगतस्य शासने
लभन्ति प्रव्रज्योपसम्पदं च ।
अल्पेच्छसन्तुष्ट वने वसन्ति
प्रशान्तचारित्र ये ध्यानगोचराः[2] ॥५॥

अनुमोदमी एकक येऽद्वितीया
वने वसन्ती सद खड्गभूताः[3] ।
आजीवशुद्धाः सद अल्पकृत्या[4]
ये ज्ञात्रहेतोर्न[5] करोति कूहनाम्[6] ॥६॥

अनुमोदमी येष न संस्तवोऽस्ति[7]
न चापि ईर्षा न कुलेषु तृष्णा ।
उत्त्रस्ति त्रैधातुकि नित्यकालम्
अनोपलिप्ता विचरन्ति लोके ॥७॥

अनुमोदमी येष प्रपञ्चु नास्ति
निर्विण्ण सर्वासु भवोपपत्तिषु ।

1 A श्रुत्व
2 A, B & Tib. drop stanza 5.
3 C धिन्‌गभू॰
4 C सदष्टप्रकृता
5 C ज्ञातमोतो न
6 C कुमात्
7 A संभवो॰

अविगृहीता उपशान्तचित्ता
न दुर्लभस्तेष समाधिरेषः[1] ॥८॥
अनुमोदमी ये गणदोष दृष्ट्वा
सर्वान् विवादान्[2] परिवर्जयित्वा ।
सेवन्त्यरण्यं वनमूलमाश्रिताः[3] ।
विमुक्तिसाराः सुगतस्य पुत्राः ॥९॥
अनुमोदमी ये विहरन्त्यरण्ये
नात्मानमुत्कर्षि पराञ्च पंसये[4] ।
अनुमोदमी येष प्रमादु[5] नास्ति
ये अप्रमत्ता इम[6] बुद्धशासने ॥१०॥
यावन्त धर्माः पृथु बोधिपाक्षिकाः[7]
सर्वेष मूलं[8] ह्ययमप्रमादः[9] ।
ये बुद्धपुत्राः सद अप्रमत्ता
न दुर्लभस्तेष अयं समाधिः ॥११॥
निधानलाभः सुगतान शासनं
प्रव्रज्यलाभो द्वितीयं निधानम् ।
श्रद्धाय लाभस्तृतीयं[10] निधान-
मयं समाधिश्चतुर्थं निधानम् ॥१२॥

1 B drops stanzas 2-8, but see part 1, p. 163fn
2 B सर्वाविवादां 3 A & B तथ वृक्षमाश्रिताः
4 A परा न पंशयीं ; B ०त्वानमुत्कपि परा न पंसयो
5 B प्रमाद 6 A & B इह 7 B ०पत्तकाः
8 A सर्वेषु मूलं ; C सर्वेस मूलं 9 B हृदयेमप्रमादः
10 C श्रद्धाप्रसादस्तृतियं

श्रुत्वा इमं[1] शून्यत बुद्धगोचरं
तस्याप्रतिक्षेपु निधानलम्भः ।
अनन्तु प्रतिभानु[2] निधानलम्भो
या धारणी तत् परमं निधानम् ॥१३॥

यावन्ति धर्माः कुशलाः प्रकीर्तिताः
शीलं श्रुतं त्यागु तथैव क्षान्तिः[3] ।
सर्वेष मूलं ह्ययमप्रमादो[4]
निधानलम्भः[5] सुगतेन देशितः ॥१४॥

ये अप्रमत्ता इह बुद्ध शासने
सम्यक् च येषां प्रणिधानमस्ति ।
न दुर्लभस्तेष अयं समाधि-
रासन्नभूता इह बुद्धशासने ॥१५॥

[ इति श्रीसमाधिराजे[6] अनुमोदनापरिवर्तो नाम
पञ्चविंशतिमः ॥२५॥ ]

1 B इमां 2 B प्रतिभान 3 C तथैव च्चामा
4 B सर्वेष मूल हृदयमप्रथमादे ; C सर्वेस मलं प्या० 5 A & B विधान०
6 B drops इति श्रीसमाधिराजे

## षड्विंशपरिवर्तः

[1]तस्मात्तर्हि कुमार अप्रमत्तो भविष्यामीत्येवं त्वया कुमार[2] शिक्षितव्यम्। [3]अप्रमत्तस्य हि कुमार बोधिसत्त्वस्य महासत्त्वस्य न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः। किमङ्ग[4] पुनरयं समाधिः। कथं च कुमार बोधिसत्त्वो महासत्त्वः अप्रमत्तो भवति। इह कुमार बोधिसत्त्वो महासत्त्वः परिशुद्धशीलो भवति। [5]इह कुमार परिशुद्धशीलो बोधिसत्त्वः अप्रमत्तो भवति[6]। इह[7] कुमार बोधिसत्त्वो महासत्त्वः परिशुद्धशीलो भवति। इह[7] कुमार परिशुद्धशीलो बोधिसत्त्वो महासत्त्वः अविरहितो भवति सर्वज्ञताचित्तेन षट्सु पारिमितासु। तस्येमे अनुशंसा भवन्ति। तान् शृणु साधु च [सुष्ठु च मनसिकुरु।] अवभाषिष्येऽहं[8] ते। दशेमे कुमार अनुशंसा दानाधिमुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश। यदुत मात्सर्यक्लेशोऽस्य निगृहीतो भवति। त्यागानुबृंहितं चास्य चित्तं सदा भवति। [9]बहुजनसाधारणेभ्यश्च भोगेभ्यः

1 A & B add तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म।

2 A drops कुमार ; B कुमार सदा

3 A & B add तत् कस्य हेतोः 4 A किमङ्गल 5 A & B drop it

6 A कथं च ; B कथञ्च कुमार बोधिसत्त्वो महासत्त· परिशुद्धशीलो भवति। इह

7 A तस्येमम् एवं रूपा अनु०

8 A भाषिष्यहन्ते। दशमे कुमारानुशंसादानाधिमुक्तस्य ; B शृणु मनसिकुरु भाषिष्येहन्ते। दस्य मे कुमारानुसंसाः

9 A बहुजनस्या०

सारमाददाति। महाभोगेषु च कुलेषूपपद्यते। जातमात्रस्य चास्य त्यागचित्तमामुखीभवति प्रियश्च भवति। चतसृणां पर्षदां विशारदश्चासङ्कुचितः[1] पर्षदमवगाहते। दिग्विदिक्षु चास्योदारो वर्णकीर्त्तिशब्दश्लोको लोकेऽभ्युद्गच्छति[2]। मृदु-तरुणहस्तपादश्च भवति। समचरणतलप्रतिष्ठितः। अविरहितश्च भवति कल्याणमित्रैर्यावद्बोधिमण्डनिषदनात्। इमे कुमार दशानुशंसा दानाधिमुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य। तत्रेद-मुच्यते।

निगृहीतं सि[3] मात्सर्यं त्यागचित्तं च बृंहितम्।
आदत्तसारो भवति समृद्धे[4] जायते कुले ॥१॥
जातमात्रस्य चित्तं सि[5] त्याग एव प्रवर्तते।
प्रियो भवति सत्त्वानां गृहिप्रव्रजितान च[6] ॥२॥
विशारदश्च पर्षत्सु असङ्करूपसंक्रमेत्[7]।
भवत्युदारशब्दोऽस्य ग्रामेषु नगरेषु च ॥३॥

1 Tib. 141b, l. 2: ཞུམ་པ་མེད་པར།

2 A & B चास्योदार॰ कीर्त्तिशब्दः श्लोकोऽभ्युद्गच्छति

3 A ॰तोऽसि ; B ॰तं शि ; Tib. 141b, l. 4-5. ངེས་ནི་སེར་སྣ་ཚར་བཅད་ཅིང༌། གཏོང་བའི་སེམས་ཀྱང་རྣམ་པར་སྤེལ། སྙིང་པོ་དག་ནི་བླངས་པར་འགྱུར།

4 B मात्सर्यत्यागचित्तं च बृहितं। आदत्तसारो भवति समृद्ध

5 C च ; Tib. དེ་ཡི=तस्य

6 A चे ; B गृहे प्रव्रजितान

7 Mss. श्रमङ्कुं ; Tib. 141b, l. 5: མ་ཞུམ་པར་ནི་ཉེ་བར་འགྲོ།

मृदू हस्तौ च पादौ च भविष्यन्ति न दुर्लभाः ।
कल्याणमित्राँल्लभते बुद्धांश्च श्रावकानपि ॥४॥

मात्सर्यचित्त सि न जातु भोति
त्यागेषु चित्तं रमतेऽस्य नित्यम्[1] ।
प्रियश्च भोति बहुसत्त्वकोटिनां[2]
अमत्सरिस्या[3] इमि आनुशंसाः ॥५॥

महाधने चापि कुले स जायते
जातस्य त्यागे रमते मनोऽस्य ।
आदत्तसारश्च करोति काल-
ममत्सरिस्या इमि आनुशंसाः ॥६॥

विशारदश्चो परिषां विगाहते[4]
उदारशब्दोऽस्य दिशासु याति ।
मृदुहस्तपादोऽस्य सदैव जायते
अमत्सरिस्या इमि आनुशंसाः[5] ॥७॥

कल्याणमित्रास्य न भोन्ति दुर्लभा
बुद्धांश्च यो पश्यति श्रावकांश्च ।
दृष्ट्वा च तान् पूजयते प्रसन्नो
अमत्सरिस्या[6] इमि आनुशंसाः ॥८॥

[ इति श्रीसमाधिराजे[7] दानानुशंसापरिवर्तो नाम
षड्विंशतिमः ॥२६॥ ]

1 A त्यागेऽस्य चित्तं रमते सदैव
2 B भोती बहुसत्त्वकोटिनी
3 C अमत्सरिष्य ; B स्यो
4 A ०दश्चापर्षद्विगाहते
5 B drops stanza 7.
6 B ०स्यो
7 B drops इति श्रीसमाधिराजे

## सप्तविंशपरिवर्तः

दशेमे कुमार अनुशंसाः परिशुद्धशीलस्य बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश। यदुत ज्ञानं च्व परिशोधयति[1] परिपूरयति। बुद्धानां भगवतामनुशिक्षते[2]। अगर्हितो भवति पण्डितानाम्। प्रतिज्ञातो न चलति[3]। प्रतिपत्तौ तिष्ठति। संसारात् पलायते। निर्वाणमर्पयति। निष्पर्युत्थानो[4] विहरति। समाधिं प्रतिलभते। अदरिद्रश्च भवति। इमे कुमार दशानुशंसाः परि-शुद्धशीलस्य बोधिसत्त्वस्य महासत्त्वस्य। तत्रेदमुच्यते।

ज्ञानं च परिपूरेति[5] बुद्धानामनुशिक्षते।
अगर्हितः पण्डितानां भोति नित्यं विशारदः ॥१॥
प्रतिज्ञातो न चलति प्रतिपत्तौ च तिष्ठति।
अर्पेति[6] येन निर्वाणं संसारातः[7] पलायते ॥२॥
निष्पर्युत्थितो विहरति[8] समाधिं[9] लभते लघु।
अदरिद्रश्च भवति[10] शीलस्कन्धे प्रतिष्ठितः ॥३॥

1 A & B ज्ञानमनुपरिवारयति
2 A & B बुद्धानामनु०
3 C भवति
4 B परायति। निर्वाणपयति। निःपर्यु०
5 A & B परिपूरयति
6 B अपैति ; Tib. 142b, l. 2: ཕྲོབ་བྱེད་ཅིང །
7 A & B संभोगतः
8 A निष्पर्युत्थानविहारी ; B निष्पर्युत्थानविहार
9 B drops it.
10 B भोती

ज्ञानं च तस्यो परिपूर्णु भोति
अनुशिक्षते चापि तथागतानाम् ।
न चास्य निन्दां प्रकरोन्ति पण्डिताः
तथा हि तस्यो परिशुद्धशीलम् ॥४॥
प्रतिज्ञातोऽसौ न चलाति[1] पण्डितः
तथा हि शूरः प्रतिपत्तिये[2] स्थितः ।
दृष्ट्वा च संसारमनेकदोषं[3]
पलायते निर्वृतियेन याति ॥५॥
पर्युत्थितं चित्तु न भोति तस्य
तथाह्यसौ शीलबले प्रतिष्ठितः[4] ।
क्षिप्रं समाधिं लभते निरङ्गणं
विशुद्धशीलस्यिमि[5] आनुशंसाः ॥६॥

[इति श्रीसमाधिराजे[6] शीलनिर्देशपरिवर्तो नाम
सप्तविंशतिमः ॥२७॥]

1 B चरति 2 Tib. 142b, l. 5: ཉན་དན་གནས་པར་བྱེད །
3 A संसारमनन्त० ; B दृष्ट्वा च दोषं
4 B प्रतिष्ठिताः 5 B परिशुद्धशीलस्त्विमि ; C परिशुद्ध०
6 B drops इति श्रीसमाधिराजे

## अष्टाविंशपरिवर्तः

दशेमे कुमार आनुशंसाः क्षान्तिप्रतिष्ठितस्य मैत्रीविहारिणो बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश। अग्निना[1] न दह्यते। शस्त्रेण[2] न हन्यते। विषमस्य न क्रमते। उदकेन न म्रियते[3]। देवताश्चैनं रक्षन्ति। लक्षणालङ्कृतं च कायं प्रतिलभते। सर्वदुर्गतिद्वाराणि चास्य पिथितानि[4] भवन्ति। ब्रह्मलोके चास्योपपत्तिर्भवति। सुखेन चास्य रात्रिन्दिवानि व्रजन्ति। [प्रीतिसुखं चास्य कायं न विजहाति। इमे कुमार दशानुशंसाः क्षान्तिप्रति]ष्ठितस्य मैत्रीविहारिणो बोधिसत्त्वस्य [महासत्त्वस्य।] तत्रेदमुच्यते—

अग्निना दह्यते नासौ शस्त्रेण न [5]च हन्यते।
विषं न क्रमते काये उदके म्रियते न सः[6] ॥१॥
रक्षन्ति देवताश्चैनं द्वात्रिंशद् भोन्ति लक्षणाः।
दुर्गतिः पिथिता चास्य क्षान्तिये आनुशंसिमे ॥२॥
ब्रह्मत्त्वमथ शक्रत्वं भोति चास्य न दुर्लभम्।
सुखं विहरते नित्यं प्रीति भोन्ति अचिन्तिया[7] ॥३॥

1 A & B यदुताग्निना
2 A & B स शस्त्रेण
3 A & B उदकेर्न म्रि०
4 C पिधितानि
5 A च न जातु हन्यते
6 A & B न च
7 A भोति प्रीति अचिन्तिया ; B ०न्तियाः

नो अग्निशस्त्रेण स जातु हन्यते
विषेण वा[1] वारिगतो न म्रियते ।
रक्षन्ति देवास्तथ नागयक्षा
मैत्रीविहारिष्यिमि[2] आनुशंसाः ॥४॥
द्वात्रिंश कायेऽस्य भवन्ति लक्षणा
नो चास्य भूयो विनिपातु भोती ।
च्युतश्च स ब्रह्मपुरोपपद्यते
क्षान्तिस्थितस्यो इमि आनुशंसाः ॥५॥
सुखेन रात्रिन्दिव तस्य यान्ति
प्रीतिस्फुटः कायु सदास्य भोति[3] ।
स[4] क्षान्तिसौरत्यबले प्रतिष्ठितः
प्रसन्नचित्तः सद भोति पण्डितः ॥६॥

दशेमे कुमारानुशंसा आरब्धवीर्यस्य बोधिसत्त्वस्य महासत्त्वस्य । कतमे दश । यदुत दुरासदश्च भवति । [5]बुद्धपरिग्रहं च प्रतिलभते । देवतापरिगृहीतश्च भवति । श्रुत्वा चास्य धर्मा[6] न परिहीयन्ते । अश्रुतपूर्वांश्च धर्मान्[7] प्रतिलभते । समाधिगोत्रं[8]

1 C च
2 B ०रिशिमि
3 C तदास्य भोति ; B प्रीतिस्फुटाः कायु सदास्य भोन्ति
4 B सौलक्षणाः स्य बले ; Tib. 143b, l. 1 : ངེས་པ །
5 Tib. 143b, l. 3 : སངས་རྒྱས་ཀྱིས །
6 B ताश्चास्य धर्मा न ; C धर्मान्
7 C ०पुरान् धर्मान्
8 C समाधिं सोऽत्र

च प्रतिलभते। अल्पाबाधश्च भवति। आहारश्चास्य सम्यक् परिणामयति[1]। पद्मोपमश्च भवति न मुसलोपमः[2]। इमे कुमार दशानुशंसा आरब्धवीर्यस्य बोधिसत्त्वस्य महासत्त्वस्य। तत्रेद-मुच्यते।

दुरासदः सदा भोति परिदाहो न[3] विद्यते।
रक्षन्ति देवताश्चैनं क्षिप्रं बुद्धान् स पश्यति ॥७॥
श्रुतं न हीयते तस्य अश्रुतं भोति आमुखम्[4]।
प्रणिधिं परिपूरेति[5] वीर्यवन्ते इमे गुणाः ॥८॥
समाधिगोत्रं लभते व्याधिश्चास्य न जायते[6]।
सुखं चास्यान्नपानानि पच्यन्ते न विषीदति[7] ॥९॥
उत्पलं वारिमध्ये वा[8] सोऽनुपूर्वेण वर्द्धते।
एवं शुक्लेहि धर्मेहि बोधिसत्त्वो विवर्द्धते ॥१०॥
अबन्ध्याश्चास्य गच्छन्ति रात्रयो दिवसानि च।
[भविष्यति मृत्युकाले फलमेतस्य चेदृशम्[9]] ॥११॥

1 A, B & Tib. आहारश्चास्य सम्यक् सुखेन परिणाम०
2 A & B drop न मुसलोपमः; Tib. 143b, l. 5: མདའ་སྟེའུ་ཁ་མ་ལྟར་མི་གྱུར་བ་སྟེ །
3 A, B & Tib. कौशीद्यं स
4 A, B & Tib. drop this line.
5 C प्रतिलाभं वर्द्धते तस्य
6 In Tib. this stanza is given thus:
प्रणिधिं परिपूरेति समाधिगोत्रं च लभते।
व्याधिश्चास्य न जायन्ते वीर्यवन्ते इमे गुणाः ॥
7 B पर्यन्ते न विषीद; C न तेन विषी०
8 A वत्सो०
9 This line is not found in any ms. It has been restored from Tibetan.

आरब्धवीर्येण तथागतेन[1]

कल्पैरनेकैः समुदागतेन ।

ये बोधिसत्त्वा विरियेणुपेता-[2]

स्तेषानुशंसा इमि संप्रकाशिताः ॥१२॥

आरब्धवीर्यो भवती दुरासदः[3]

परिगृहीतो भवती जिनेहि ।

देवापि तस्य स्पृह संजनेन्ति

न चिरेण[4] सो लप्स्यति बुद्धबोधिम् ॥१३॥

श्रुतं च तस्यो न कदाचि हीयते

अन्ये पृथू चापि लभन्ति धर्मा[5] ।

प्रतिभानु तस्यो अधिमात्तु वर्द्धते[6]

आरब्धवीर्यस्य इमेऽनुशंसाः ॥१४॥

समाधिगोत्रं च लघुं धिगच्छती[7]

आबाधु तस्यो न कदाचि भोति ।

यथैव[8] सो भोजनु तत्र भुञ्जते

सुखेन तस्यो परिणामु गच्छति ॥१५॥

1 C अनन्य तेन

2 A विनयैरुपेता ; B विनियेमुपेता०

3 A भवतीह शूरतः ; B भवति ह शूरतः

4 B न विस्तरेण

5 A अन्ये पृथु चाभ्युदयन्ति अर्थाः ; B अन्ये स्पृथ चाभ्युदयन्ति अर्थाः ; Tib. 144a, l. 4: ཆོས་གཞན་མང་པོ་སྣ་བར་བྱེད ।

6 C भुवने

7 A & B निगच्छति ; C विगच्छति

8 B यश्चैव

रात्रिन्दिवं भवति[1] शुक्लपक्षो
आरब्धवीर्यस्य अतन्द्रितस्य[2] ।
बोधी पि[3] तस्यो [ न चिरेण भेष्यते ]
तथा ह्यसौ वीर्यबलैरुपेतः[4] ॥१६॥

दशेमे कुमारानुशंसा ध्यानाधिमुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य । कतमे दश । यदुताचारे तिष्ठति । [गोचरे चरति । ] निष्परिदाहो विहरति । गुप्तेन्द्रियो भवति । प्रीतिमनुभवति । विविक्तः कामैः । अतृप्तो[5] ध्यानैः । मुक्तो मारविषयात् । प्रतिष्ठितो बुद्धविषये । विमुक्तिं परिपाचयति[6] । इमे कुमार दशानुशंसा [ध्या]नाधिमुक्तस्य[7] बोधिसत्त्वस्य महासत्त्वस्य । तत्रेदमुच्यते ।

नासौ भोति अनाचारो आचारे संप्रतिष्ठितः[8] ।
गोचरे चरते योगी वर्जेति च[9] अगोचरम् ॥१७॥
निष्परिदाह्यविहरी गुप्तेन्द्रिय सुसंवृतः[10] ।
अनुभवति संप्रीतिं ध्यान ध्यायिस्य गोचरः ॥१८॥
विरक्तः[11] कामतृष्णाया ध्यानसौख्यं निषेवते ।
मुक्तोऽसौ मारविषयाद् बुद्धगोचरि संस्थितः[12] ॥१९॥

1 A वर्द्धति    2 C अनन्य तस्य    3 B बोधि पि
4 B ०बलेगुमेतः ; C ०बलेनुमेत
5 C अपरिमुक्तो ; Tib. 144b, l. 1 : ཚིམ་པ་མེད་པ །
6 A & B परिपूरयति    7 B ०मुक्तकस्य
8 B ०रे प्रतिष्ठितः    9 B यामी वर्जेति च
10 A गुप्तो इन्द्रियसंवृतः ; B निष्परिदाह विहारी प्रक्तो इन्द्रियसंवृतः
11 A & B विमुक्ताः    12 B ०या बुद्धगोचरे सं०

योगिनो हि विशेषोऽयं यदेको रमते वने ।
विमुक्तिं परिपाचेति[1] तं भोति [दशमं] पदम् ॥२०॥

आचारि सो[2] तिष्ठति बोधिसत्त्वः
सर्वा[नना]चारु विवर्जयित्वा[3] ।
अगोचरं वर्जिय गोचरे स्थितः
समाधियुक्ते इमि आनुशंसाः ॥२१॥

परिदाहु तस्यो न कदाचि भोति
आर्यं स्पृशित्वेह सुखं निरामिषम्[4] ।
कायेन चित्तेन च भोति शीतलः
समाधियुक्तो इमि आनुशंसाः ॥२२॥

विहरत्यरण्यायतनेषु गुप्तो
विक्षेपु तस्यो न कदाचि भोति ।
प्रीतिं च तस्मिल्लँभते[5] निरामिषं
तथाहि कायेन[6] विविक्तु भोति ॥२३॥

अलिप्त कामेहि असंकिलिष्टो[7]
तथाहि मारविषयात्तु मुक्तः ।
तथागतानां विषये प्रतिष्ठितो
विमुक्ति तस्यो परिपाकु गच्छति ॥२४॥

1 A & B परिपूरेति
2 A आचारिणा
3 B ०चारविचार विव० ; Tib. 144b, l. 6: སྤྱོད་པ་མ་ཡིན་ཐམས་ཅད། ।
4 C आर्यं स्पृशेत सुखं निरामिषम्
5 C ०भते मिमां
6 A & B कामेन ; Tib. 145a, l. 1 : ལུས་ན། ।
7 Mss असंक्लिलिष्टो

दशेमे कुमारानुशंसाः प्रज्ञाचरितस्य बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश। यदुत सर्वस्वपरित्यागो भवति न च दानेन शुद्धिं मन्यते। अखण्डशीलश्च भवति न च शीलमाश्रितः। क्षान्तिबलसुप्रतिष्ठितश्च[1] भवति न च सत्त्व[2]संज्ञासंप्रतिष्ठितः[2]। आरब्धवीर्यश्च भवति कायचित्तविविक्तः। ध्यानध्यायी च भवति अप्रतिष्ठितध्यायी। दुर्धर्षश्च[3] भवति मारैः। अप्रकम्प्यश्च[4] भवति सर्वपरप्रवादिभिः[5]। लब्धालोकश्च भवति सर्वसंस्कारगत्याम्[6]। अधिमात्रा चास्य सर्वसत्त्वेषु महाकरुणा समतिक्रामति[7]। न च श्रावकप्रत्येकभूमेः स्पृहयति। बुद्धध्यानसमाधिसमापत्तीरवतरति। इमे कुमार दशानुशंसाः प्रज्ञाचरितस्य बोधिसत्त्वस्य महासत्त्वस्य। तत्रेदमुच्यते।

सर्वस्वं त्यजते धीरः[8] शुद्धिं तेन न मन्यते[9]।
अखण्डं रक्षते शीलं निःश्रयोऽस्य[10] न विद्यते ॥२५॥

1 A & B क्षान्ति बलश्च०

2 A drops सत्त्व; A & B संज्ञा प्रति०; Tib. 145a, l. 5. སེམས་ཅན་དུ་འདུ་ཤེས་པ་ལ་མི་གནས་པ་ཡིན།

3 B ०ध्यायदुर्जयश्च; C दुर्वर्षश्च; Tib. 145a, l. 7: ཐུབ་པར་དཀའ་བ་ཡིན།

4 A अक०; B ०रेकंपश्च

5 C ०परप्रचारिभिः

6 A & C लब्धलोकश्च; Tib. 145a, l. 7: འདུ་བྱེད་འཇུག་པ་ཐམས་ཅད་ལ་སྣང་བ་ཐོབ་པ་ཡིན།

7 A ०करुणावक्रामति; B ०करुणा च क्रामति

8 A & B शूरः

9 C तेनान तन्यते

10 B निश्रयास्व

क्षान्तिं भावेति स प्राज्ञः सत्त्वसंज्ञा विवर्तिता[1] ।
आरब्धवीर्यो भवति कायचित्तविविक्ततः[2] ॥२६॥
ध्यानध्यायी च सो भोति अप्रतिष्ठो अनिःश्रितः[3] ।
दुर्धर्षो[4] भोति मारेहि प्रज्ञावन्त[5] इमे गुणाः ॥२७॥
अकम्पियो च यो भोति सर्वैः परप्रवादिभिः ।
लब्धालोकश्च संसारे[6] प्रज्ञाया ईदृशा गुणाः ॥२८॥
महाकृपां स लभते[7] सर्वसत्त्वान अन्तिके ।
श्रावकप्रत्येकज्ञाने[8] न स्पृहेति कदाचन ॥२९॥
सर्वस्वत्यागेन न शुद्धि मन्यते
अखण्डशीलो न च शीलनिःश्रितः[9] ।
भावेति क्षान्ती[10] न च सत्त्वसंज्ञा[11]
प्रज्ञाधिमुक्ते इमि आनुशंसाः ॥३०॥
आरब्धवीर्यो भवती विमुक्तो
अनिःश्रितो[12] ध्यायति अप्रतिष्ठितः ।
दुर्धर्षु मारेण[13] स भोति पण्डितो[14]
प्रज्ञाविमुक्ते इमि आनुशंसाः[15] ॥३१॥

1 A क्षान्ति भावेति संशक्तः सत्त्वसंज्ञा विवर्जितः ; C ०वेति सर्वज्ञः सर्वज्ञानाः
Tib. 145b, l. 3 : ཤེས་རབ་ཅན་དེ་བཟོད་སྒོམ་ཡང ། སེམས་ཅན་འདུ་ཤེས་རྣམ་པར་བཟློག །

2 C ०विविक्तकः 3 C अनिःसृतः 4 C दुर्वर्षैः

5 B भवति मारेहि प्रज्ञावन्ते 6 Tib. 145b, l. 5 : འཁོར་བ་ན ।

7 A महाकृपां संलभते ; C यथाक्रियां 8 C प्रत्ययज्ञाने

9 निःसृत 10 A भावे च क्षान्ति ; B क्षान्ति 11 A ०सज्ञी ; B संगी

12 B विविक्तो अनिश्रितो 13 B दुर्जय मारेहि

14 B पण्डितः 15 A drops this stanza.

अकम्पियो भोति[1] परप्रवादिभिः
स लब्ध गाधो भवतीह संस्कृते[2] ।
अधिमात्र सत्त्वेषु कृपां जनेति[3]
प्रज्ञाधिमुक्ते इमि आनुशंसाः ॥२२॥

प्रत्येकबुद्धेषु च श्रावकेषु चो
न तस्य जातु स्पृह तेषु जायते ।
तथा ह्यसौ बुद्धगुणाः प्रतिष्ठिताः[4]
प्रज्ञाधिमुक्ते इमि[5] आनुशंसाः ॥२३॥

दशेमे कुमारानुशंसा बहुश्रुतस्य बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश । यदुत संक्लेशं न करोति । व्यापादं न जनयति । कांक्षां विवृणोति । दृष्टिमृज्वीकरोति । उत्पथं च[6] वर्जयति । मार्गे प्रतिष्ठते[7] । अमृतद्वारे तिष्ठति । आसन्नस्थायी भवति[8] बोधये । आलोकभूतो भवति सत्त्वानाम् । दुर्गतिभ्यो न बिभेति । इमे कुमार दशानुशंसा बहुश्रुतस्य बोधिसत्त्वस्य महासत्त्वस्य । तत्रेदमुच्यते ।

अनुशंसा दशैवैते बाहुश्रुत्ये[9] प्रकाशिताः ।
तथागतेन बुद्धेन यथाभूतं प्रजानता ॥२४॥

1 C °सो सोति पर

2 Tib. 146a, l. 2: ངེས་ནི་འདུས་བྱས་འདི་ནི་གཏིང་རྙེད་པས ।= He dives deep into the constituted objects.

3 C जनित्वा

4 A & B °गुणप्रतिष्ठितः

5 A °मुक्तेरिमि ; B इमि

6 C drops च

7 C तिष्ठते ; B प्रतिष्ठितै

8 A & B आसन्नो भवति

9 C बहुश्रुत्व

संक्लेशं व्यवदानं च उभौ पक्षौ स जानति ।
संक्लेशं परिवर्जित्वा व्योदाने मार्गे तिष्ठति[1] ॥३५॥
कांक्षां विवरति[2] ज्ञानी दृष्टीमृज्वीकरोति च ।
मार्ग उत्पथ[3] वर्जेति ऋजुके मार्गि तिष्ठति[4] ॥३६॥
तिष्ठते चामृतद्वारे आसन्नो भोति[5] बोधये ।
आलोकभूतः सत्त्वानां दुर्गतिभ्यो न भीयति[6] ॥३७॥
जानाति धर्मं पृथु सांकिलेशिकं
व्यवदानपक्षं पि तथैव जानति ।
स संकिलेशं परिवर्जयित्वा
व्योदानि संशिक्षति धर्मि उत्तमे[7] ॥३८॥
कांक्षां च सो विवरति सर्वप्राणिनां
दृष्टी च[8] तस्यो भवति सदोज्ज्वका[9] ।
स उत्पथं मार्गु विवर्जयित्वा
संतिष्ठते ऋजुकि पथे सदा शिवे[10] ॥३९॥

1 A ०यौदानं मार्गु सेवते

2 A काङ्क्षा निरमति ; C कांक्षा विचरति ; Tib. 1446b, l. 2: རྣམ་འབྱེད །

3 B मार्गु उत्पथु

4 A तिष्ठते ; B मार्गे तिष्ठति

5 B असन्नि भोति ; C आसन्न स्थायिनो

6 B बिभेति

7 B drops this stanza.

8 A दृष्टिश्च

9 A सदोद्धका ; C सतोज्ज्वका

10 C repeats here first three lines of stanza 39 and last line of stanza 38

अमृतस्य द्वारे भवती सदा स्थितो
आसन्न भोती विपुलाय बोधये ।
आलोकभूतः पृथु सर्वप्राणिनां
न चाप्यसौ[1] भायति दुर्गतिभ्यः[2] ॥४०॥

[3]दशेमे कुमारानुशंसा धर्मदानगुरुकस्य बोधिसत्त्वस्य महासत्त्वस्य परेभ्यो धर्मदानं ददतः। कतमे दश। यदुत अक्रियां[4] विवर्जयति[5]। क्रियामवतरति। सत्पुरुषधर्मे प्रतिष्ठते[6]। बुद्धक्षेत्रं परिशोधयति। बोधिमण्डमर्पयति। वस्तु[7] परित्यजति। क्लेशान्निगृह्णाति[8]। सर्वसत्त्वेभ्यः प्रत्यंशं द[दाति। त]दारंवणां च मैत्रीं[9] भावयति। दृष्टधार्मिकं च सुखं प्रतिलभते[10]। इमे कुमार दशानुशंसा धर्मदानगुरुकस्य बोधिसत्त्वस्य महासत्त्वस्य परेभ्यो धर्मदानं ददतः। तत्रेदमुच्यते—

यो हि दानं ददात्यग्रं धर्मदानममत्सरी।
दश तस्यानुशंसा वै लोकनाथेन भाषिताः ॥४१॥

1 A न चापि सो
2 B drops this stanza.
3 B adds:—इमे कुमार दशानुशंसा बहुश्रुतस्य बोधिसत्त्वस्य महासत्त्वस्य। तत्रेदमुच्यते। अनुशंसा दशैवैते बाहुश्रुत्ये प्रकाशिता। जानाति धर्मान्पृथु सांकिलेशिकां etc. as in stanzas 38-40.
4 C अक्षयां
5 A & B वर्जयिति
6 B प्रतिष्टते
7 C वस्तं
8 C ॰न्निर्ह्लाति
9 B सर्वसत्त्वस्य प्रत्यंसं ददाति तदारम्बणा च मैत्री
10 B ॰लप्स्यते

अक्रियां सर्वि वर्जेति क्रियामोतरते[1] विदुः।
सत्पुरुषधर्मप्रतिपन्न[2]स्त्यागचित्तं निषेवते ॥४२॥
बुद्धक्षेत्रं च शोधेति[3] क्षेत्रं भोतिस्यनुत्तरम्[4] ।
बोधिमण्डं समारूढो धर्मदानस्यिदं फलम् ॥४३॥
त्यजते सर्व वस्तूनि शिक्षते धर्मराजिनः।
क्लेशा निगृहीतस्य बोधिस्तस्य[5] न दुर्लभा ॥४४॥
सर्वसत्त्वान प्रत्यंशं मैत्रचित्तः प्रयच्छति ।
अनीर्षुकश्च सो भोति सौख्यं भोतिस्यऽमानुषम्[6] ॥४५॥
विवर्जिता अक्रिया पण्डितेन
क्रियाय सो नित्य विदुः प्रतिष्ठितः ।
महात्मधर्मेषु सदा प्रतिष्ठितो
यो धर्मदानं सद देति पण्डितः ॥४६॥
क्षेत्रं च तस्य सद भोति शुद्धं[7]
धर्मा विवर्धंतिमि [8]बोधिपाक्षिकाः ।

1 A अक्रियां सर्वि वर्जित्वा ; B अक्रियां स विवर्जेति क्रियामोत्तरते ; C अकृत्य सर्वि वर्जेति क्रियामोनुती ; Tib. 147a, l. 4: མཁས་པ་བྱ་བ་རྣམས་ལ་འཇུག །

2 A धर्मप्रसन्न० ; B ०धर्मे प्रसन्नः 3 A & B ०क्षेत्रं विशोधेति

4 A भोस्यत्यचिन्तियं ; B भोतिस्यचिन्तियं

5 A क्लेशा निगृहीतास्य बोधिश्चास्य ; B बोधि चास्य

6 A भोत्यस्य ; B अनुषुकं च सो भोति सौख्यं भोतिस्य मानुषाः ; Tib. 147a' l. 7: མི་མ་ཡིན་པའི་སྐྱིད་པ་འཐོབ །

7 A क्षेत्रं तस्यो भवति विशुद्धं ; B भवती

8 A सि बोधि ; B धर्मा विवर्जन्ति सिद्धि बोधि०

आसन्न भोति[1] सद बोधिमण्डे
धर्मं ददित्वा[2] इमि[3] आनुशंसाः ॥४७॥
क्लेशा न सन्ती परित्यक्त वस्तून्
वस्तुं परिज्ञातु[4] स्वलक्षणेन।
विमुक्त सर्वेहि परिग्रहेही
न तस्य सङ्गो भवती कदाचित्[5] ॥४८॥
उपस्थितं चित्तु[6] विचक्षणस्य
सर्वेऽपि सत्त्वा सुखिनो भवन्तु।
स मैत्रचित्तो भवती अनीर्ष्युको[7]
दृष्टेव धर्मेऽस्य सुखम् अनल्पकम्[8] ॥४९॥

(दशेमे कुमारानुशंसाः शून्यताविहारिणो[9] बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश। यदुत बुद्धविहारेण विहरति। अनिःश्रितो[10] ध्यायति। उपपत्तिं न[11] प्रार्थयति। शीलं[12] न परामृशति[13]। आर्यान्नापवदति। अविरुद्धो विहरति। वस्तु नोपलभते[14]। विविक्तश्च भवति[15]। बुद्धान्नाभ्याख्यायति[16]। सद्धर्मं[17]

1 B भोती
2 A विदित्वा ; B धर्मान् द०
3 B इति ; C च
4 B वस्तू परिज्ञतु
5 B तस्य संभोस्य सुखं अनलपकः
6 A स प्रतिष्ठितुं चित्त
7 A अनीषुकः
8 B drops this stanza.
9 A शून्यताधिमुक्तस्य ; B शून्यधिमुक्तस्य
10 A अनिर्श्रितो ; B अनिश्रितो ; Tib. 147b, l. 6: བསམ་གཏན་བྱེད་པ །
11 C च
12 A शीलश्च
13 B ०मृषति
14 A अविरुद्धो वस्तुं नोप ; B वस्तुन्नाप०
15 C विविक्तः स्वपिति
16 B बुद्धान्नाभ्याख्याति
17 B drops सद्धर्मं धारयति

धारयति। इमे कुमार दशानुशंसाः शून्यताविहारिणो बोधिसत्त्वस्य महासत्त्वस्य। तत्रेदमुच्यते

यो विहारो नरेन्द्राणां सर्वबुद्धान गोचरः।
तेनो[1] विहरते योगी यत्र जीवो न लभ्यते ॥५०॥
अनिःश्रितः सर्वलोके आर्यं ध्यानं न[2] रिंचति।
उपपत्तिं न प्रार्थेति दृष्ट्वा धर्मस्वभावताम् ॥५१॥
अपरामृष्टशीलस्य भवेच्छीलमनिःश्रितम्।
न सोऽपवदते किञ्चिदन्यमार्यं अनास्रवम्[3] ॥५२॥
अविरुद्धो[4] विहरति विवादोऽस्य न विद्यते।
वस्तुं नोपलभेद् योगी[5] विविक्तो विहरी[6] सदा ॥५३॥
अभ्याख्याति न सो बुद्धमपि जीवितकारणात्।
निःश्रितः शून्यधर्मेषु कायसाक्षी विशारदः ॥५४॥
सर्वेषां लोकनाथानां बुद्धबोधिमचिन्तियाम्।
धर्मं धारेति सत्कृत्य बुद्धधर्मान्न[7] काङ्क्षति ॥५५॥
ये ते विहाराः पुरुषर्षभाणां
यस्मिन्न भूमिः पृथुतीर्थिकानाम्[8]।
विहरत्यसौ तैरिह बोधिसत्त्वो[9]
यस्मिन्न सत्त्वो न जीवु [न] पुद्गलः[10] ॥५६॥

1 A & B तेना, 2 A सर्वलोकेस्मिन्नार्यधर्मं न; B सर्वलोकेस्मिं आर्यधर्मैन्न
3 A & B ०दन्य मार्गमनाश्रवम्
4 B ०रूद्धो
5 B & C वस्तु नोपलभते योगी
6 A विहरते; B विहरती
7 C शून्यां धर्मां न
8 C नीतिकानाम्
9 A drops सत्त्वो
10 A पुगलः; B जीव पुद्गलः

न निःश्रयस्तस्य कदाचि विद्यते
अनिःश्रितः सेवते[1] ध्यानसौख्यम् ।
निरात्म निःसत्त्व विदित्व धर्मा-
नुपपत्तिसंज्ञास्य न[2] जातु भोति ॥५७॥
स्वभावु धर्माण प्रजानतश्च[3]
शीलेऽपि तस्येह न कश्चि निःश्रयः ।
शीलेन नो[4] मन्यति जातु शुद्धिं[5]
प्रसादमार्येषु करोति नित्यम् ॥५८॥
विरोधु तस्यो न कदाचि भोति
विभाविताः सर्वस्वभावशून्याः[6] ।
न चापि सोऽभ्याख्याति नायकानां[7]
सद्धर्म[8] धारित्व तथागतानाम् ॥५९॥

( दशे[मे] कुमारानुशंसाः प्रतिसंलयनाभियुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य । कतमे दश । यदुत अनाविलचित्तो भवति । अप्रमत्तो विहरति[9] । बुद्धमनुस्मरति । चर्यां श्रद्दधाति । ज्ञाने न कांक्षति । कृतज्ञो भवति । बुद्धानां[10] धर्मं न प्रतिक्षिपति । सुसंवृतो विहरति[11] । दान्तभूमिमनुप्राप्नोति[12] । प्रतिसंविदः[13]

1 B सेवति
2 A ०सज्ञा न
3 A & B विजानतश्च
4 C चो ; A ना
5 A वृद्धिं
6 C ०वितं वस्तु विदित्व चर्यः
7 A & B सोभ्याख्यि कदाचि नायकां
8 B स धर्मु
9 A & B भवति
10 A बुद्धां
11 A & B भवति
12 A & B ०मनुप्राप्तो भवति
13 A & B चतस्रः प्रति०

साक्षात्करोति। इमे कुमार दशानुशंसाः प्रतिसंलयनाभियुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य। तत्रेदमुच्यते।

चित्तमनाविलं[1] भोति प्रमादाः[2] सर्वि वर्जिताः।
अप्रमत्तो विहरति प्रतिसंलानगोचरम् ॥६०॥

श्रुत्वा च लोकनाथानां चर्यां बुद्धान श्रद्दधे।
ज्ञाने न कांक्षते योगी बुद्धज्ञाने अचिन्तिये[3] ॥६१॥

कृतज्ञो भोति बुद्धानां बुद्धधर्मान्न कांक्षति[4]।
सुसंवृतो विहरति दान्तभूमिप्रतिष्ठितः ॥६२॥

प्रतिसंविदः स[5] लभते य एको रमते सदा[6]।
जहित्वा लाभसत्कारं प्रतिसंलान[7]गोचरः ॥६३॥

चित्तं च तस्यो भवति अनाविलं[8]
सर्वे प्रमादाः परिवर्जितास्य।
सदाप्रमत्तो[9] भवती महात्मा
समाधियुक्तस्य इमे नुशंसाः ॥६४॥

स्मरित्व बुद्धान् द्विपदानमुत्तमान्
श्रद्धाति तेषां चरियामनुत्तराम्[10]।

1 C चित्तस्यनाविलं ; B चित्त' सि अना० ; Tib. 148b. l. 7. དེ་ཡི་སེམས་ནི་རྙོག་པ་མེད །
2 A प्रमादात् ; C प्रमदा
3 A ०ज्ञानेन अचिन्तिया ; B योगि बुद्ध ज्ञाने अचिन्तिया
4 C ०धर्मान
5 A drops स ; B सं०
6 A & B वने
7 B ०लीनेन
8 B चित्तश्च तस्यो भवती अना०
9 B & C प्रसन्नो
10 A चरियां निरुत्तराम् ; B ०श्चर्यान्निरुत्तराः

न कांक्षति[1] ज्ञानु तथागतानां
समाधियुक्ते इमि आनुशंसाः ॥६५॥

बुद्धान सो भोति सदा[2] कृतज्ञो[3]
न जीवितार्थं स क्षिपेत[4] धर्मम् ।
सुसंवृतो विहरति नित्यकालं
समाधियुक्ते इमि आनुशंसाः ॥६६॥

स दान्तभूमीमनुप्राप्तु भोति
प्रतिसंविदः साक्षिकरोति क्षिप्रम् ।
अनाच्छेद्य-वाक्य[5] प्रतिभानवांश्च
सूत्रान्तकोटिनियुतान भाषते ॥६७॥

स बुद्धबोधिं परिगृह्णते लघुम्[6]
आरक्षते शासनु नायकस्य[7] ।
निहनित्व सो सर्व परप्रवादिनः[8]
करोति वैस्तारिक बुद्धबोधिम् ॥६८॥

इतश्चवित्वान स[9] बोधिसत्त्वः
सुखावतीं गच्छति लोकधातुम् ।

1 A & B काङ्क्षते
2 A महा०
3 B कृतज्ञा
4 A & B ०र्थं पि त्तिपी स ; C त्तपेत
5 A ०वाच्यः ; B अनाच्छेद वाक्तः
6 A परिगृह्यते ; B लघु
7 A & B नायकानां
8 A विहरित्व सो सर्व परप्रवादीं ; C धर्मे त्वमौ सर्व ; see Tib. 149b, l. 1 :
དེས་ནི་ཕ་རོལ་རྒོལ་བ་ཀུན་བཙོམས་སྟེ །
9 A इतश्च च्युत्वामस ; B इतश्चुत्वाम

अनुत्पादधर्मेषु च क्षान्ति लप्स्यते
अमितायुषो धर्मवराग्रु श्रुत्वा[1] ॥६९॥

दशेमे कुमारानुशंसा अरण्यवासगुरुकस्य बोधिसत्त्वस्य महासत्त्वस्य। कतमे दश। यदुताल्पकृत्यो विहरति। गणं[2] वर्जयति। विवादोऽस्य न भवति। अव्यावध्यो भवति[3]। आस्रवान्न वर्धयति[4]। अधिकरणं न करोति। उपशान्तश्चरति। सुसंवृतश्च[5] विहरति। मोक्षानुकूला चास्य चित्तसन्ततिर्भवति। क्षिप्रं च विमुक्तिं साक्षात्करोति[6]। इमे कुमार दशानुशंसा अरण्यवासगुरुकस्य बोधिसत्त्वस्य महासत्त्वस्य। तत्रेदमुच्यते।

अल्पकृत्यः सदा भोति गणं वर्जेति दूरतः।
विवादो न भवत्यस्य वनेष्वेकविहारिणः[7] ॥७०॥
अव्यावध्येन[8] चित्तेन आस्रवान्न विवर्धयेत्[9]।
नास्याधिकरणं भोति गुणा[स्तेऽरण्य]वासिनः ॥७१॥
उपशान्तः स चरते मनोवाक्कायसंवृतः।
मोक्षानुकूलो भवति विमुक्तिं क्षिप्र स्पर्शति[10] ॥७२॥

1 B धर्मधराश्रकृत्वा ; C धर्मवराः श्रुताः। Here, the Tibetan xylograph marks the end of the ninth section.

2 A & B गणं दूरेण दूरं वर्ज०

3 A & B ०वध्यो विहरति

4 A विवर्धते ; B विवर्द्धति

5 A & B सुसंवृत्तचित्तश्च

6 C adds अल्पकृच्छ्रेण च समाधिं प्रतिलभते।

7 A वने चैक०

8 B अव्यावधेन ; Tib. 149, l. 7: གནོད་པ་མེད་པའི་སེམས་ཀྱིས་ནི །

9 A & B विवर्द्धते

10 C क्षिप्रु मर्शयेत्

भवति सततमल्पकृत्यु योगी
पृथुगणदोषेण विवर्जयित्वा[1] ।
न विवदति कदाचि मुक्त योगी
इमि गुण तस्य भवत्यरण्यवासे ॥७३॥
यद् भवति निर्विण्णु संस्कृतेऽसौ
न भवति तस्य स्पृहा कहिंचि[2] लोके ।
न च भवति विवृद्धिरास्रवाणां
वनि वसतोऽस्य भवन्ति आनुशंसाः ॥७४॥
अधिकरणु न जातु चास्य भोति[3]
उपशान्तरतो विवेकचारी ।
वचसि मनसि काय संवृतस्यो
बहुगुण तस्य भवन्त्यरण्यवासे ॥७५॥
भवति च अनुकूल तस्य मोक्षो
लघु प्रतिपद्यति[4] सो विमुक्तिशान्तम् ।
वनि वसति विमुक्ति सेवतोऽस्या[5]
इमि गुण भोन्ति अरण्यवासि सर्वे ॥७६॥

दशेमे कुमारानुशंसाः पिण्डचारिकस्य [धूतगुण-संलेख-प्रतिष्ठितस्य] बोधिसत्त्वस्य महासत्त्वस्य । कतमे दश । यदुत

1 A ०दोषेण स विव० ; B दोषत सर्वि वर्जयित्वा
2 B स्पृहां कश्चि लोके
3 A न जातु तस्य भोती , C drops जातु
4 A प्रतिविध्यसि ; प्रतिविध्सति
5 C वनवरस्रु विचित्तु सेवतोस्या

ज्ञातकामतास्य[1] न भवति। यशस्कामतास्य न भवति। लाभ-सत्कारकामतास्य न भवति[2]। आर्यवंश[3]प्रतिष्ठितश्च भवति। कुहनलपनतास्य न भवति[4]। आत्मानं नोत्कर्षयति। परांश्च पंसयति। अ[नुन]यप्रतिघप्रहीणः परगृहे[5] चरति। निरामिषं [च] धर्मदानं ददाति। धूतगुणसंलेख[6]प्रतिष्ठितस्य चास्य[7] ग्राह्या धर्मदेशना भवति। इमे कुमार दशानुशंसाः पिण्डपातिकस्य[8] धूतगुणसंलेख[9]प्रतिष्ठितस्य बोधिसत्त्वस्य महासत्त्वस्य। तत्रेदमुच्यते—

न ज्ञातकामो भवति यशो नाप्यभिनन्दते[10]।
लाभालाभे समचित्तो[11] यो धूतेषु प्रतिष्ठितः ॥७७॥
नोत्सृजत्यार्यवंशं च [12]कुहना लपना न च[13]।
उत्कर्षेति[14] न चात्मानं परान् पंसयते न च ॥७८॥
प्रति[घा]नुनयौ चास्य[15] धर्मं देशी निरामिषम्।
ग्राह्यं सि वचनं भोति पिण्डपाते गुणा अमी[16] ॥७९॥

1 C ०कामस्य
2 A drops these two items.
3 A चतुरार्यवंश०
4 A कूहनलपनता वास्य ; B drops कुहनलपनतास्य न भवति Tib. 150b, l. 1 : ཚུལ་འཆོས། =दम्भ। In S. C. Das's Dictionary p. 146, it is explained as "hypocrisy, a mere outward performance of religious rites and observances".
5 A & B ०गृहेषु
6 C ०संलेखि०
7 B ०ष्ठित चास्य
8 A & B पिण्डचारिकस्य
9 C ०संलेखि०
10 C नास्यभिनन्दने
11 A & B लाभालाभे सममना ; C न लाभा०
12 A & B ०वंशांश्च कूहना
13 A & B add—वर्जेति दूरतः सर्वा यो धूतेषु प्रतिष्ठितः।
14 B उत्कर्षते
15 A ०नयेनास्य ; B प्रतिघानुनयो नास्य
16 A & B अमी गुणाः

न मार्गते ज्ञात्र यशो न लाभं[1]
चतुरार्यवंशे भवति प्रतिष्ठितः ।
अकुहको[2] अलपकु भोति पण्डितो
धूताधिमुक्तस्य[3] इमीदृशा गुणाः ॥८०॥

नात्मानमुत्कर्षि पराङ्ग पंसी[4]
परुषं पि उक्तो[5] न कदाचि कुप्यते ।
वर्णं पि श्रुत्वा जनये न[6] हर्षं
यः पिण्डपातेन भवेत तुष्टः ॥८१॥

निरामिषं देति[7] च धर्मदानं
न लाभसत्कार गवेषतेऽसौ ।
ग्राह्या च तस्य भवतेऽस्य भाषितं
धूताधिमुक्तस्य[8] इमे नुशंसाः[9] ॥८२॥

इति हि कुमार एवंरूपेषु धूतगुणेषु[10] प्रतिष्ठितो बोधिसत्त्वो महासत्त्वोऽरण्ये विहरन् बुद्धनिधानं[11] प्रतिलभते। धर्मनिधानं प्रतिलभते[12]। ज्ञाननिधानं प्रतिलभते। पूर्वान्तापरान्तप्रत्युत्-पन्नज्ञाननिधानं प्रतिलभते। कथं च कुमार बोधिसत्त्वो महासत्त्वो

1 B न मार्गैतेस्य द्विविषय च
2 C अकूणको
3 A धूताभियुक्तस्य
4 A नात्मानमुत्कर्षि पराङ्ग पंशयी ; B पंसी ; C पराण
5 C पुरुषं हि उक्तो
6 A न जनेति
7 C देहि
8 A ग्राह्य च तत्र भवतेस्यषितं धूताभियुक्तस्य
9 B drops stanza 82.
10 C drops धूत
11 C ०निधानानि
12 A drops धर्मनिधानं प्रतिलभते

बुद्धनिधानं प्रतिलभते[1]। इमाः[2] [3]कुमार विवेकचारी बोधिसत्त्वो महासत्त्वः पञ्चाभिज्ञाः प्रतिलभते[3]। स दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेण पूर्वस्यां दिशि अप्रमेयानसंख्येयान् बुद्धान् भगवतः पश्यति[4]। एवं दक्षिणस्यां पश्चिमायामुत्तरस्यां[5] दिशि अप्रमेयानसंख्येयान् बुद्धान् भगवतः पश्यति। सोऽविरहितो भवति बुद्धदर्शनेन। एवं हि कुमार बोधिसत्त्वो महासत्त्वो बुद्धनिधानं प्रतिलभते। कथं च कुमार बोधिसत्त्वो महासत्त्वो धर्मनिधानं प्रतिलभते। यश्च ते बुद्धा भगवन्तो धर्मं देशयन्ति तं स बोधिसत्त्वो महासत्त्वो[6] दिव्येन श्रोत्रधातुना सर्वं शृणोति। सोऽविरहितो भवति धर्मश्रवणेन। एवं हि कुमार बोधिसत्त्वो महासत्त्वो धर्मनिधानं प्रतिलभते। कथं च कुमार बोधिसत्त्वो महासत्त्वो ज्ञाननिधानं प्रतिलभते। येन ज्ञानेन[7] सर्वधर्मानाराधयति। आराधयित्वा[8] अविप्रमूषितस्मृतिः सत्त्वानां धर्मं देशयति। तस्य च[9] योऽर्थः स प्रजानाति[10]। एवं हि कुमार बोधिसत्त्वो महासत्त्वो ज्ञाननिधानं

1 B drops it.

2 A इह ; B इमां

3 A adds.—कतमाः पञ्च। यदुत दिव्यचक्षुः दिव्यश्रोत्रं परचित्तज्ञानं पूर्वनिवासानुस्मरणं ऋद्धिविधं च। इमाः पञ्चाभिज्ञाः प्रतिलभते।

4 C adds सोऽविरहितो भवति बुद्धदर्शनेन।

5 A & B मुत्तरायां ; C पश्चिमस्यां

6 A & B add दशसु दिक्षु

7 A & B ज्ञानेन समन्वागतो बोधिसत्त्वो महासत्त्वः

8 B सर्वधर्मानाधारयति। आधारयित्वा

9 A & B यस्य च

10 A ०र्थं संप्रजानाति ; ०स्तं प्रजानाति

प्रतिलभते। कथं च कुमार बोधिसत्त्वो महासत्त्वः पूर्वान्तापरान्त-प्रत्युत्पन्नज्ञाननिधानं प्रतिलभते। सोऽभिज्ञयातीतानागतप्रत्युत्पन्नसर्वसत्त्वचित्तचरित[1]ज्ञानमवतरति। एवं हि कुमार बोधिसत्त्वो महासत्त्वः पूर्वान्तापरान्तप्रत्युत्पन्नज्ञाननिधानं प्रतिलभते। संक्षिप्तेन कुमार एवं गुणधर्मप्रतिष्ठितो बोधिसत्त्वो महासत्त्वः सर्वबुद्धधर्मान् प्रतिलभते। यत्राभूमिः सर्वश्रावक-प्रत्येकबुद्धानां कः पुनर्वादः सर्वप[र]प्रवादिनाम्। [तत्रेदमुच्यते]

बुद्धनिधानं च धर्मनिधानं
ज्ञाननिधानं च पूर्वान्तनिधानम्।
पञ्च अभिज्ञाः स क्षिप्रं लभति
यो विदू रणि सदा स्थितु भोती ॥८३॥

[इति श्रीसमाधिराजे दशानुशंसापरिवर्तो नाम
अष्टाविंशतितमः ॥२८॥]

1 A drops it; B ०सर्वं सच्चित्त०

## एकोनविंशपरिवर्तः

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म । तस्मात्तर्हि कुमार दिव्यानि चक्रवर्तिराज्यैश्वर्यसुखान्यपहाय प्रव्रजिष्यामीत्येवं त्वया कुमार सदा शिक्षितव्यम् । प्रव्रजितेन कुमार धूतगुणसंलेखप्रतिष्ठितेन विवेकचारिणा क्षान्तिसौरत्य-सम्पन्नेन भवितव्यम् । सदा चारब्धवीर्येण ते कुमारादीप्तशिर-श्चैलोपमेनायं सर्वधर्मस्वभावसमताविपञ्चितः समाधिः श्रोतव्य उद्ग्रहीतव्यः पर्यवाप्तव्यः प्रवर्तयितव्यो धारयितव्यो वाचयितव्यः उद्देष्टव्यः स्वाध्यातव्योऽरणाभावनया भावयितव्यो बहुलीकर्तव्यः । परेभ्यश्च विस्तरेण संप्रकाशयितव्यः खड्गविषाणभूतेनाद्वितीयेन च ते कुमार अरण्यनिषेविणा सदा भवितव्यम् । आत्मपरि-त्यागेनापि ते कुमार सर्वसत्त्वानामर्थः सदा करणीय इति ।

अथ खलु भगवांस्तस्यां वेलायामेतमेवार्थमुद्भावयंश्चन्द्रप्रभस्य कुमारभूतस्येमं पूर्वयोगकथापरिवर्तं गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म ।

स्मरामी[1] अतीत बहुकल्पशता
यद आसि नायकु अनन्तयशाः[2]

1 A & B स्मरमी    2 C ०यशः

नरदेवनागगणपूजनियो
नामेन[1] तेजगणि[2] राज जिनो[3] ॥१॥
दश[4] भिक्षुकोटि षडभिज्ञरूहाः
प्रतिसंविदान वशिपारगताः[5] ।
धूतवृत्तसंलेखित शान्तमनाः
जाता[6] तस्य तेन समयेन गणाः ॥२॥
षट्सप्तती नगरकोटिशताः[7]
पञ्चाश-योजन-प्रमाण समाः ।
रतनान सप्तन विशिष्ट वरा[8]
इह जम्बुद्वीपि[9] तद कालि अभूत ॥३॥
तद कालि ते पुरवराः सकलाः
प्रतिमण्डिता बहु उद्यानशतैः ।
उद्यान सर्वि घनमेघनिभाः
फलपुष्पमण्डित तरुनिचिताः ॥४॥
फलवृक्षजातिविविधा रुचिराः[10]
लकुचाम्रजम्बूपनसैर्निचिताः[11] ।

1 C नाम नामेन
2 A जगुणिवाजुजिनो ; C नामेन तेजगहि राजजिनो ; Tib. 152 b, l. 6: གཟི་བརྗིད་ཚོགས །
3 In C. stanzas 1-11 appear here as also at the end of ch. 27.
4 A & B दशा
5 A सुवेशि ; प्रतिसंविदाश्रवसि
6 A & C इति ; B इमु ; Tib. 152b, l. 7: བྱུང །
7 B सतां
8 B adds इमु तस्य तेन समयेण गणाः
9 A ०द्वीपे
10 B रुचिताः
11 A लकुचाम्बुपनस नि ; B लकुचांम्रजां बुगनसैरचिताः

कर्णिकारचम्पकपुन्नागशतैः[1]

प्रतिमण्डितास्त[2] उद्यानवराः ॥५॥

न्यग्रोध सर्वि द्विजसंघरुताः

कलविङ्क-कोकिल-मयूरशतैः ।

शुक-जीवञ्जीवक-कुणालरुता

बहुपक्षिसङ्घरुत कालि तदा ॥६॥

धृतराष्ट्रराजहंसोपनिभा

भृङ्ग-कुणाला[3] वरघोषरुताः ।

चित्राङ्गरक्तमहावर्णप्रभाः

सुमनोज्ञ-शब्द-मधुरा मुदिताः ॥७॥

इति पक्षि समागत कालि तदा

कलविङ्क-मयूरविहङ्गरुतैः ।

परपुष्ट-शारिक विचित्र द्विजा

बहुपक्षिघोषरुत नानविधाः[4] ॥८॥

तेहि निषेवित उद्यानशता

मुचिलिन्द-वार्षिक-अशोकशतैः ।

अतिमुक्तकाथ[5] जवपुष्पपत्रैः

पद्मोत्पलैः कुमुदपुण्डरिकैः ॥९॥

1 A चम्पकपुष्पकमण्डित

2 C ०तानि त ; A drops this line.

3 A ०मम्परकुणारशुका ; B ०कुणालसुकाः

4 A & C नानाविधाः

5 A ०कोषजीवपुष्प ; B अभिमुक्तिकाध्वजपुष्पपटैः ; Tib. 153, l. 6:
ཨ་ཏི་མུ་ཀྟ་ཀ་མེ་ཏོག་འདབ་མ་དང །

पद्मैः सहस्रशतपत्त्रचिता[1]

इमि पुष्प पुष्करिणि[2]शोभकराः ।

प्रतिमण्डिताः सुरभिगन्धवराः

शोभन्ति पुष्करिणियो[3] रुचिराः ॥१०॥

तहि कालि राज इह जम्बुध्वजे

दृढदत्तु आसि मनुजाधिपतिः ।

पुत्राण तस्य अभु पञ्चशताः

प्रासादिकाः परमसुदर्शनीयाः[4] ॥११॥

तहि कालि राज्यु शिवु क्षेम अभूत्[5]

अनुपद्रुतं सुरमणीय शिवम् ।

अयु जम्बुद्वीप कुसुमैर्निचितो

निर्विशेष[6] देवभवनेहि समम् ॥१२॥

तहि कालि सो दशबलो अनिघो[7]

जिनु भाषते इमु समाधिवरम् ।

स्वप्नोपमा भवगती सकला

न च कश्चि जायति न चो म्रियते[8] ॥१३॥

1 A adds इह जम्बुध्वज दृढ़दत्तु आसि मनुजाधि ; B पद्मैः सहस्रेण त पत्त्रचिताः

2 B पुष्किरिणि

3 B पुष्किरिणियो

4 A & B सुदर्श ; C परमदर्शनिकाः

5 A & B राज्य शिवक्षेममभूत्

6 A निर्विशेषु ; C निविशेस दैव०

7 A & B अनिघो ; C अनियो ; Tib. 153b, l 3 སྡིག་མེད། ।

8 A न चा म्रियते ; C कजी के यात न च म्रियते

न सत्त्व[1] लभ्यति न जीवु नरो
इमि धर्म फेनकदलीसदृशाः ।
मायोपमा गगनविद्युसमोद्[2]-
चन्द्रसन्निभ मरीचिसमाः[3] ॥१४॥

न च अस्मि लोकि मृतु क[श्चि नरो]
[परलो]कि संक्रामति गच्छति वा ।
न च कर्म नश्यति कदाचि कृतं
फलमेति कृष्णा शुभ संसरतो[4] ॥१५॥

न च शाश्वतं न च उच्छेदु पुनो[5]
न च[6] कर्मसंचयु न चापि स्थितिः ।
न च सोऽपि कृत्व पुनरस्पृशती
न च अन्यु कृत्व पुन वेदयते ॥१६॥

न च संक्रमो न च पुनागमनं
न च[7] सर्वमस्ति न च नास्ति पुनः ।
न च दृष्टिस्थानुगति-शुद्धिरिहो[8]
न च सत्त्वचरु न प्रशान्तगती[9] ॥१७॥

1 A न च सत्य ; B न च संवु लभ्यति ; C न च च लभ्यति
2 A विद्युत्समोदक० ; B ०समादक
3 A adds :—सुपिनोपमं हि त्रिभवसिकं लघु भग्नमनित्यतमायतनं ।
न च आगतं न वा इहापगतं शून्यानिमित्तसदसन्ततियो ॥
4 A फल देति क्रुस शुभ ; B फल देति कृष्ण शुभ
5 A उच्छेदु पुरा ; B न च उच्छेद्र ; C उभेदु
6 A drops च 7 B न चा 8 B गते सुद्धिरिहो
9 Tib. 153b, l. 7: འདི་ན་ལྷ་གནས་འཇུག་པ་དག་པ་མིན། །
སེམས་ཅན་སྤྱོད་པ་རབ་ཞི་འཇུག་པ་མེད། །

शान्त-प्रशान्त-उपशान्त-गती
न च [सा गती क्वचन[1]] संस्थिहती[2] ।
भावु स्वभावु नुगताः[3] सततं
निपुणं सुदुर्दृशु पदं अचलम् ॥२२॥

न च सा चला हि स्वयमेव स्थिता
[अस्थिता] अनागत स्वभावु स्थिता ।
न च शक्य[4] भाषितु स्वभावु स्थिती
शून्या च सा अचलु धर्मस्थिती[5] ॥२३॥

घोषश्च उक्त न च घोषगती
घोषस्वभावगति धर्मगती ।
न च घोषु सञ्चयु स्थिती च क्वचि[6]
एवं स्वभावुगति धर्मगती[7] ॥२४॥

1 A गती क्वचिन क्वचिन
2 A संस्थिहतीः ; C संस्थिहतिः
3 A भावस्वभावानुगताः ; Tib. 154b, l. 6: རྟག་ཏུ་དངོས་པའི་རང་བཞིན་རྗེས་སུ་སོང་།
4 A न च शक्यु ; B सञ्च
5 Tib. 154a, l. 6-7:
དེ་ནི་མི་གཡོ་བདག་ཉིད་གནས་པ་སྟེ།
མི་གནས་མ་འོངས་རང་བཞིན་གནས་པ་ཡིན།
རང་བཞིན་གནས་པ་བཤད་པར་མི་ནུས་ཏེ།
དེ་ནི་སྟོང་པ་མི་གཡོ་ཆོས་ཀྱི་གནས།
6 A & B स्थितीह क्वची
7 Tib. 154a, l. 7:
དབྱངས་ཀྱིས་བཤད་ཀྱང་དབྱངས་ཀྱི་འཇུག་པ་མེད།
དབྱངས་ཀྱིས་རང་བཞིན་འཇུག་པ་ཆོས་ཀྱི་འགྲོས།

गतिशब्द उक्तु[1] न च सत्त्वगती
 धर्मस्वभाव निपुणार्थगती ।
घोषोऽपि चोक्तु न च सत्त्वगती
 न च घोषु लभ्यति न सत्त्वगतिः[2] ॥२५॥
न च अनन्त नान्त[3] न च मध्यगतिः[2]
 नैवास्ति नास्ति न च देशगती ।
ज्ञाता च यादृश[4] स्वभावगती
 इय देशना जिनवराण समा ॥२६॥
विरजं विशुद्धि परमार्थपदं[5]
 शान्त प्रशान्त अरजं[6] विरजम् ।
न च कल्प मन्यन[7] प्रशान्तपदं
 जिनु भाषते परम कारुणिको ॥२७॥

དབྱངས་ཀྱི་ཚོགས་གནས་གང་ནའང་ཡོད་མ་ཡིན །
དེ་ལྟར་རང་བཞིན་འཇུག་པ་ཆོས་ཀྱི་འགྲོས །

1 A उक्क 2 A ०गती
3 A & B अन्तु नं तु ; C अनन्त नन्त
4 B ज्ञाना च यादृसं
5 A विशुद्धु परमार्थ समं C परमं ; Tib. 154b, l. 4. རྡུལ་མེད །
6 A & B प्रशान्तमरजं
7 Tid. 154b, l. 4: རྟོག་དང་རློམ་སེམས་མེད་པར །

न पि चास्ति अक्षरप्रचार[1] इहो[2]

विपुला गतिर्विपुल[3] अर्थगती ।

बुद्धेहि सेवित जिनेहि[4] स्तुता

अवभास धर्मनय सूक्ष्मगती[5] ॥२८॥

[धर्म]निधान विरजं विपुलं

यत्र स्थिता अप्रतिमा सुगता[6] ।

देशेन्ति धर्मरतनं विरजं

परमार्थशून्य निपुणार्थगती[7] ॥२९॥

अश्रौषि राजन् दृढदत्तु[8] तदा

द्विपदेन्द्र भाषति समाधिमिमम् ।

सोऽशीतिकोटिनयुतेहि तदा[9]

उपसंक्रमी तद जिनु कारुणिकम् ॥३०॥

बलवन्तु गौरवु[10] जनेत्व जिने

वन्दित्व पादु मनुजाधिपतिः ।

1 A न च अस्ति अक्षर प्र० ; B अक्ष प्रचारु    2 A इहास्ति

3 Mss. मतिर्विपुल ; Tib. 154b, l. 4-5: འགྲོ་བ་ཡངས་ཤིང་ཡངས་དོན་འགྲོ་བ་སྟེ །    4 A & B जिनेन

5 Tib. 154, l. 5: འཇུག་པ་ཕྲ །

6 Ibid.: དེ་ལ་གནས་ནས་བདེ་གཤེགས་མཚུངས་མེད་པ །

7 Tib. 154b, l. 6: དོན་དམ་སྟོང ། ཞི་བའི་དོན་ལ་འཇུག་པ་སྟོན་པར་མཛད །    8 A राज दृढदन्तु ; Tib, 154b. l. 7: བརྟན་བྱིན །

9 A drops stanza 30 ; B नियुतेहि सदा

10 B ०व

[पुरतः] स्थितो दशबलस्य तदा
कृताञ्जलिर्दशनखः[1] प्रमुदितः ॥३१॥
तस्यो विदित्व परिशुद्धचरीं[2]
जिन इन्द्रियेषु वशिपारंगतः ।
अधिमुक्ति[3] कोविदु नरः प्रवरो[4]
इमु तस्य देशयि समाधिवरम् ॥३२॥
यद तेन राज्ञ परमाथ श्रुतो[5]
उत्पन्न प्रीति अरिया विपुला[6] ।
उज्झित्व द्वीप सकलांश्चतुरो
विजहित्व कामम् अभिनिष्क्रमि सो ॥३३॥
यद[7] राज प्रव्रजि जहित्व महीं
बोधाय अर्थिकु भविष्यि जिनः ।
सर्वं[8] मनुष्य इह जम्बुध्वजे[9]
विजहित्व कामरती[10] प्रव्रजिताः ॥३४॥

1 C कृत्वाञ्जलि दशबल ; Tib 155a, l. 1 རབ་ཏུ་དགའ་ཞིང་སོར་བཅུ་ཐལ་མོ་སྦྱར། ।

2 B ॰शुद्धचरि जिनु ; C ॰शुद्धवती

3 B ॰मुक्तु 4 B नरप्रवरा

5 A तेन राद्धि परमार्थु श्रुतो ; B राज्ञि परमार्थु श्रुता

6 A & B अरिया विपुल

7 B यदु 8 B सर्वे

9 B ध्वजा 10 A & B ॰गुण

विपुलो गणो[1] दशबलस्य तदा
बहु भिक्षु भिक्षुणि[2] प्रयुक्तमनाः ।
अकृष्टा अनुप्त तद ओषधयो[3]
प्रादुर्भूता[4] मरुत्परिचराः[5] ॥३५॥
काषाय त्रिचीवर प्रादुर्भूता
समच्छिन्न सुसीवित[6] तेऽनुपमाः ।
अमला विरजाश्च सुवर्णचिता[7]
बुद्धस्य गुणोचित पुण्यबलाः ॥३६॥
पश्यो कुमार स हि राजवरो
विजहित्व सर्व महि प्रव्रजितः[8] ।
भेष्यन्ति सत्त्व क्षयकालि बहु
[9]अपरीत्तभोगा न त्यजन्ति गृहान् ॥३७॥
[ताडन]बन्धन-कुदण्ड बहु[10]
आक्रोशतर्जनमनिष्टदुःखम् ।

1 A & C विपुला गणो 2 B भिक्षुणीं

3 Tib. 155a, l. 5. དེ་ཚེ་མ་རྨོས་མ་བཏབ་རྩི་འབྲུངས་ཏེ། ལྷ་རྣམས་ཀྱང་ནི་གཡོག་དང་བསྙེན་བཀུར་བྱེད། =मरुद्भिः पर्युपासिताः

4 A प्रादुर्भूत 5 B पारि० 6 A सुसीर्षित ते० ; C असीवित ते०

7 C अवर्णचिता ; Tib. 155a, l. 6: གསེར་བརྒྱན་པ།

8 A महीं प्रव्र ; B सहि प्रव्रजित० ; C ०जिता

9 A सुपरीत्त भोगेन ; C अपरित्त

10 A & B पृथु ; Tib. 155b, l. 1: ཞིང་སྒྲོག་དང་ནི་བཅིང་བ་ཆད་པ་མང་།

सहिष्यन्ति[1] राजकुल[2] पीड़ बहु
 [3]सुपरीत्तभोग न च भक्तु गृहे ॥३८॥
अपरीत्त आयु[4] नं च अस्ति धनं
 सुमहान् प्रमादु[5] न च पुण्यबलम् ।
न च शिल्पस्थानकुशला अबुधा[6]
 दारिद्रियं च न च वित्तु गृहे[7] ॥३९॥
परदारगृद्धु[8] अविशुद्धमना
 ईर्ष्यालुकाः परमसाहसिकाः ।
संक्लिष्टधर्म न च वृत्तु[9]स्थिता
 वक्ष्यन्ति बुद्ध भविष्याम वयम् ॥४०॥
उत्कोचवंचनक साहसिका[10]
 अहमाढ्यु धर्म धनदास्मि[11] जगे ।

1 B सहिसन्ति
2 A & B कुलि
3 C ०रित्त
4 A & B सुपरी० ; C अपरित्तमायु
5 A सुमहाप्रादु ; B प्रसाद ; Tib. 155b, l. 2: རབ་ཏུ་བག་ཆུང་བསོད་ནམས་སྟོབས་ཀྱང་མེད །
6 B अबुद्धा
7 A & B ०द्रियं न च चिन्तु , C विन्नु ; Tib. 156b, l. 2-3: དབུལ་པོར་གྱུར་ཅིང་ཁྱིམ་ན་ནོར་ཡང་མེད །
8 C परिदारिगृद्ध
9 A वृत्ति ; B वृत्त ; Tib. 155b, l. 3: ཚུལ་ལ་མི་གནས་ཀྱང །
10 B उत्क्वोटवञ्चनक साहस्रिका
11 A अहुमादु धर्म धनु ; B अहु सादु धर्म धनुदास्मि ; Tib. 155b, l. 4: ང་ནི་ཕྱུག་པོ་འཇིག་རྟེན་ཆོས་ནོར་སྦྱིན །

उपघातकाः कुहक नैकृतिका[1]
वक्ष्यन्ति बुद्ध भविष्याम वयम् ॥४१॥
वधबन्धपद्रवि परस्य रताः
दुःशील दारुण प्रदुष्टमनाः ।
अकृतज्ञ भेदक विहिंसस्थिता
वक्ष्यन्ति हन्ते भण[2] बोधिचरिम् ॥४२॥
यस्यैव तेन श्रुत बोधिचरी
तस्यैव मध्यि प्रतिघं जनयी ।
श्रुत्वा च बुध[3]स्खलितमेकपदं
तस्यैव भाषति[4] अवर्णशतान् ॥४३॥
तदिमां[5] कुमार मम श्रुत्व गिरं
मा तेहि संस्तवु करोहि तदा[6] ।
सुपिनान्तरेपि अविश्वस्त सिया[7]
यदि इच्छसे स्पृशितु[8] बोधिचरीम्[9] ॥४४॥

1 B उपघाटकाः कुहक नैकतिकाः ; cf. Pali : नेकतिक ; Tib. 155b, l. 4: གནོད་པ་བྱེད་ཅིང་ཚུལ་འཆོས་སྒྱུ་མ་དག ।=उपघातकाः कूटकुञ्चकाः cf. Pali : कटुकञ्चुकता

2 A भणे ; C भणि

3 A श्रुत्वा बुधः ; B च बुद्धः ; C प्रबुधः ; Tib. 155b, l. 6: མཁས་པས་འཁྲུལ་པ་ཚིག་འགའ་ཐོས་ན་ཡང ।

4 B भासता ; C भासति

5 A तदिम

6 A & B सदा

7 A मविश्वस्तशिया ; B ०मविश्वस्तुसियो

8 A स्पृशित्व

9 B ०चरीन्

धूतवृत्त संलिखित नैकगुणान्[1]
　　परिकीर्तयन्तु बहुकल्पशतान् ।
भणती गुणान्न च गुणेषु स्थितो
　　न स बुध्यते परमबोधिशिवाम्[2] ॥४५॥
भवथा सदापि अखिला मधुरा[3]
　　सद शुद्धशील सुप्रसन्नमनाः ।
परिशुद्धशीलु भवथा[4] सततं
　　न चिरेण लप्स्यथ[5] समाधिवरम् ॥४६॥
न करोथ मान न[6] जनेथ खिलं
　　[परिशुद्धमा]नस सदा भवथा ।
मद्मानम्रक्ष विजहित्व ततः
　　प्रतिलप्स्यथा[7] इमु समाधिवरम् ॥४७॥
गुणतो अनुस्मरि जिनं सततं
　　वरकांचनच्छविप्र[भास]करम् ।

1 B ०खित नैकगुणां ; C ०खिते

2 A परबोधि ; A & C गिराम् ; Tib. 156a, l. 2 : བྱང་ཆུབ་ཞི་བ་མཆོག།

3 A & B सखिला ; C सखिलाभ ; Ibid. : ཁོར་མོར་ཡང་ནི་དགེ་ཞིང་ འཇམ་པར་གྱིས །

4 B परिसुद्धसील न च था　　5 C लप्स्यति for लप्स्यथ throughout

6 A मथराथ मान ; C मनोरथ

7 A प्रतिलप्स्यता

गगनं[1] व रात्रिय नक्षत्रस्फुटं

तथ कायु[2] लक्षणस्फुटो मुनिनो[3] ॥४८॥

ध्वजच्छत्रवितानपताकवरां

चूर्णानुलेपन गृहीत्व बहून्[4] ।

पूजां करोथ सुगतस्य सदा[5]

न चिरेण लप्स्यथ समाधिवरम् ॥४९॥

वरगन्धमाल्यकुसुमा रुचिरां[6]

वादित्रतूर्य प्रगृहीत बहु ।

जिनस्तूपि पूज प्रकरोथ[7] सदा

न चिरेण लप्स्यथ[8] समाधिवरम्[9] ॥५०॥

पणवैः सुघोषकमृदङ्ग शतैः[10]

पटहैर्विपंचितवरवेणुरवैः ।

1 A गगनं च ; C वरगन्ध माल्य नत्तत्र ; Tib. 156a, l. 5: མཚན་མོ་ གནམ་ལ་སྐར་མས་གང་བ་ལྟར །

2 B काय

3 A & B & Tib. add—

चंक्रमस्थाननिषद्यशयिनः स्मरते मनुजो मनिचन्द्रम् ।

तिष्ठति तस्य पुरः सद शास्ता तस्य निर्वृति भोति उदारा ॥

4 B बहूम्　　5 C सुगन्ध शदी

6 B ०माल्यकुसुमाल्यरुचिरां

7 B पूजरोथ　　8 C लप्स्यति

9 A & B & Tib. 156b, l. 1-2 add:—

वरनृत्यगीतबहुभिर्विविधैर्वरहास्यलास्यपरिशुद्धमनाः ।

वरदीपदामरुचिरैश्च सदा प्रकरोथ पूज वर अप्रतिमे ॥

10 C पणवा सुघोषकमृदङ्ग तथा पटहाः पणव=drum of bell metal ; पटह=kettledrum ; cf. Pali=पटहभेरी ; विपंचित=various kinds.

मधुरस्वरविविधवाद्यगुणः[1]
पूजेथ नायकु [2]प्रसन्नमनाः ॥५१॥
कारेथ बुद्धप्रतिमां रुचिरां
रतनामयीं सुपरिकर्मकृताम्[3] ।
प्रासादिकां परम[सु]दर्शनीयां[4]
न चिरेण लप्स्यथ समाधिवरम्[5] ॥५२॥
वनषण्डं[6] सेवेथ विविक्त सदा
विजहित्व ग्रामनगरेषु रतिम् ।
अद्वितीय खड्ग सम भोथ सदा
न चिरेण लप्स्यथ समाधिवरम् ॥५३॥
अहु धर्मस्वामि[7] मम यूयु सुता
अनुशिक्षथा मम समाधिचरिम्[8] ।

1 A & C ०गणैः; Tib. 156b, l. 3: སྒྲ་སྙན་རོལ་མོའི་ཡོན་ཏན་སྣ་ཚོགས་ཀྱིས །

2 B प्रसान्त०

3 B रत्नामयीन् सुपरिकर्मकृतः प्रसादिकां

4 C ०नियां

5 A & B & Tib. 156b, l. 4 f. add:—
तथ हेमरूप्यकमयीं प्रतिमां कारेथ चन्दनमयी च वरां ।
प्रासादिकां परमसुदर्शनीयां न चिरेण लप्स्यथ समाधिवरम् ॥
कारेथ मृन्मयमयीं प्रतिमां तथ शैलकाष्ठपटचित्रगताम् ।
प्रासादिकां परमसुदर्शनीयां न चिरेण लप्स्यथ समाधिवरम् ॥

6 A वनखण्ड; B सैवथ

7 Tib. 156b, l. 7: ང་ནི་ཆོས་རྗེ །

8 A समाधिवरम्; B अनुशिक्षथा न समाधि०; C अनुशिक्षिथा मम

अहु सो[1] अभूषि दिशता सुविश्रुतो
दृढदत्तु नाम मनुजाधिपतिः ॥५४॥
मय[2] बुद्ध पूजित अनन्त पुरे
मय[2] शीलु रक्षितु विशुद्धमनाः ।
मय[2] गौरवं दशबलेषु कृतं
इमु शान्तमेषत[3] समाधिवरम् ॥५५॥
मय पुत्रदार परित्यक्त पुरे[4]
शिरहस्तपादनयनाग्रवराः ।
न च लीनचित्तत कदाचि कृता
इमु शान्तमेषत समाधिवरम्[5] ॥५६॥
धनधान्यदास बहु[6]दासिशता
रतना प्रभूत परित्यक्तु मया ।
सन्तर्पितापि बहुयाचनका
इमु शान्तमेषत[7] समाधिवरम्[8] ॥५७॥
मय[9] मुक्तिस्फटिकसुवर्ण बहु[10]
वैदूर्यशङ्खशिल त्यक्तु[11] पुरे ।

1 B अहूषो ; Tib. 157a, l. 1 : ང་ནི་དེ་ཚེ་གྲགས་སྐྱ་གྲགས་པ་ཞི ।

2 C मयि throughout. 3 C ०मेषथ

4 B drops lines 2-4 of st. 55 and first line of st. 56.

5 A शान्त समाधिमेषत वरं

6 A ०धान्यबहु० 7 C ०मेषथ

8 B drops st. 57 9 A & B मणि

10 A & B फटिक सुवर्ण बहुं 11 B ०सिलत्यक्त

मणि[1] शुद्ध रूपिय प्रवाड़ घना[2]
इमु शान्तमेषत समाधिवरम् ॥५८॥
मय त्यक्त आभरण नानविधा
वरमुक्तहार तथ सीहनुकाः[3] ।
रतनान जालिक विशिष्ट पृथु
इमु शान्तमेषत समाधिवरम्[4] ॥५९॥
मय वस्त्रकोट्य परमा सुखुमाः[5]
परिशुद्ध काशिक[दु]कूल वराः ।
बहु हेमचित्र परित्यक्तु पुरे
इमु शान्तमेषत[6] समाधिवरम् ॥६०॥
मय[7] हस्ति अश्वरथ नानविधाः
परित्यक्तु स्वप्रियसुतो महिलाः[8] ।
न च दौर्मनस्यत कदाचि कृता[9]
इमु शान्तमेषत[10] समाधिवरम् ॥६१॥

1 A adds दास
2 C प्रभानुधना ; B प्रवात एना ; Tib. 157a, l. 5 : ནོར་བུ་གཟུགས་གཙང་བྱུ་རུ་འབྲུ་རྣམས་བཏང ।
3 A सीहडकाः ; cf Pali सीहकुण्डला ; Tib. 157a, l. 6 : རྣ་བཞིན་སེང་གེ་ཅན ।
4 B drops st. 59.
5 A मयि वस्त्र कोट्यपरमा सुखुमाः ; B मयि
6 A इसुमेषत समाधिवर'
7 A & B मयि हस्ति
8 A & B सुप्रिय सुत
9 B दौमनदाचिंकृता
10 C ०मेषथ

मय[1] दृष्ट्व पूर्वि सुदरिद्र नराः
पर्येष्टि दुःखित च कृच्छ्रगताः[2] ।
मय[1] ते धनेन अदरिद्र कृताः
इमु शान्तमेषत समाधिवरम् ॥६२॥

हस्तीरथाश्वरथका नयुताः[3]
प्रच्छन्न रतन-मणिजालचिताः ।
दत्ता मया याचनकान पुरा
इमु शान्तमेषत समाधिवरम् ॥६३॥

उद्यानकोटिनयुता[4] बहवः
समलंकरित्व मय दत्त[5] पुरा ।
हर्षेत्व मानसु जनित्व कृपां[6]
इमु शान्तमेषत समाधिवरम् ॥६४॥

ग्रामाथ राष्ट्रनगरा निगमाः
समलंकरित्व मय[1] दत्त पुरा ।
दत्त्वा च प्रीतिमनुभोमि सदा
इमु शान्तमेषत समाधिवरम् ॥६५॥

1 A & B मयि
2 B सुकृष्टगता
3 A & B हस्तीरथा अश्वरथा नयुक्रताः
4 A ०टिनियुता ; B ०कोटीनियुता
5 A समलंकरित्व मयि दत्तु ; B करित्व मयि दत्त ; Tib. 157b. l, 5: ལེགས་པར་བརྒྱན་བྱས་ཏེ །
6 A हर्षेत्व मान सुतेत्व कृपा

रतनान राश[य] सुमेरुसमा-
स्तथ चीवराभ[र]णकाश्च बहु[1] ।
ये दत्त पूर्वि मय[2] याचनके
इमु शान्तमेषत समाधिवरम् ॥६६॥

सुदरिद्रसत्त्व कृत आढ्यु मया[3]
[4]परिकृच्छ्रप्राप्त परित्रात बहु ।
बहु [5]दुःखुपद्रुत सुखी मि कृता
इमु शान्तमेषत समाधिवरम् ॥६७॥

यद आसि ईश्वरु महीय अहं
दुखितांश्च पश्यमि बहुं जनताम्[6] ।
उत्सृष्ट तेषु मय[2] राज्यमभूत्
कृप संजनेत्व सुखितो च तथा ॥६८॥

ये मे कुमार कृत आश्चरिया[7]
कृत दुष्कराणि बहुकल्पशता ।
न च ते मय[2] क्षपण शक्य सिया[8]
कल्पान कोटिनयुता भणतः[9] ॥६९॥

1 A & B ०कांश्च बहून्
2 A & B मयि
3 B सदरिद्र सत्त्व कृत आत्मयाः
4 A परम० ; B पर०
5 B बहु दुखः प्रद्रुत ; C ०दुखि०
6 A & B बसुजन०
7 B आचरिया
8 A कृपण शक्यसि या ; B कृपण स कृसिया ; Tib. 158a, l. 3:
དེ་དག་བཤད་ཀྱང་ཟད་པར་མི་ནུས་སོ །
9 A नयुतां भणतां ; B नियुतां भणतां

उन्मत्तचित्तभूमि[1] गच्छि नरा
अश्रद्दधन्त सुगतस्य चरिम् ।
कृत ये मि दुष्कर तदाश्चरिया[2]
इमु शान्तमेषत समाधिवरम् ॥७०॥
आरोचयामि च कुमार इदं[3]
श्रद्दधन्त मे अवितथं वचनम्[4] ।
[5]न हि वाच भाषति[6] मृषां सुगतः
सद सत्यवादि जिनु कारुणिकः ॥७१॥
अन्ये इमेऽपि च प्रकार बहू
चरता मि शोधित य कल्पशताः[7] ।
कथ[म]हं [8]लभित्विमु समाधिवरं
मोचेय सत्त्वनियुतां[9] दुखिताम्[10] ॥७२॥

1 B उत्तमत्तचित्तभ्रमि
2 A & B तद आश्चरिया
3 & B वः कुमार इमं ; B वः कुमार इदं
4 A अवितथवच॰
5 B adds न हि वाचतं
6 A भाषि
7 A & B ॰शतां
8 B कथंहंभित्विमं
9 B मोचय सत्त्वनियुतांदु॰
10 Tib. 158a, l. 5-6:

ཇི་ལྟར་ཏིང་འཛིན་མཆོག་ཀྱང་འཐོབ་འགྱུར་ཞིང །
སེམས་ཅན་ཁྲག་ཁྲིག་སྡུག་བསྔལ་ཐར་བྱ་ཞེས །
བསྐལ་པ་མང་པོར་སྤྱོད་པ་འདི་དག་དང །
གཞན་ཡང་ངས་ནི་རྣམ་པ་མང་པོ་སྦྱངས །

यस्मिन् क्षणे अयु समाधि मया
प्रतिलब्धभूत महाज्ञानपथः[1] ।
सोऽहं लभित्विमु समाधिवरं
पश्यामि बुद्ध नयुतान् सुबहून्[2] ॥७३॥

ऋद्धी अनन्त प्रतिलब्ध मया
स विकुर्वमाणु व्रजा क्षेत्रशतान्[3] ।
गत्वा च पृच्छि[4] [अहु] कारुणिकान्[5]
प्रश्नान कोटिनियुतान बहुम्[6] ॥७४॥

यश्चैव भाषि मम ते[7] सुगता
प्रश्नान कोटिनियुतान[8] तदा[9] ।
गृह्णित्व सर्वमहु[10]धारयमी[11]
न च भ्रंशयते[12] एकपदंपि ममा ॥७५॥

तं चो श्रुणित्व अहु भूतनयं
प्रश्नान कोटिनयुता[न][13] बहुम्[6] ।

1 B महपथः; Tib. 158a, l. 7: ཏིང་འཛིན་དམ་པ་ཡེ་ཤེས་ཆེན་པོའི་ལམ།

2 A & B बुद्धनियुतां सुबहू

3 A & B व्रजि क्षेत्रशतां; Tib. 158b, l. 1: ཞིང་བརྒྱ་ཏུ་རྣམ་པར་སྤྲུལ་པས་འགྲོ།

4 C पृच्छ

5 A & B ०कां

6 B प्रमाणकोटिनियुतानि बहू; C नयुतानि बहु

7 B यच्चैव भाषि मम ते; C य चौव भाषिम ते

8 A नियुतानि; C नयुतानि

9 A & B पुरा

10 A & B सर्विंह

11 B ०रयामी

12 A भ्रश्यती; B भेष्यती

13 A & B त्तियु०

देशित्व तं विरजशान्तपदं

स्थपेमि सत्त्व बहु[1] ज्ञानपथे ॥७६॥

अस्मिन् समाधिय स्थिहित्व मया

शिक्षित्व भू[त]नय[2] कल्पशतान् ।

बहु सत्त्व कोटिनयुतानि[3] पुरा

ये स्थापिता विरजि[4] मार्गवरे ॥७७॥

येही न दृष्ट[5] पुरिमा सुगता

भाषन्तका इमु नयं विरजम्[6] ।

तेही न शक्यमिह[7] श्रद्दधितु

परमार्थ-शून्यत-समाधिवरम् ॥७८॥

ये श्राद्ध पण्डित विधिज्ञ नरा

गम्भीर[8]भूतनय लब्धनयाः ।

ते ना त्रसन्ति न च संत्रसित्व[9]

श्रुत्वा च भोन्ति[10] सद आत्तमनाः ॥७९॥

1 B बहू ; C बहुः

2 C भू-मयि ; Tib. 158b, l. 3 : ཡང་དག་པ་ཡི་ཚུལ་དེ་ངས་གོམས་ནས །

3 B °युतान

4 A विरज

5 A & B दृष्टि

6 A & B इमु समाधिवरं

7 A & B शक्यमिमु

8 B गम्भीरा Tib. 158b, l. 6 :

ཡང་དག་ཚུལ་ཟབ་ཚུལ་རྣམས་ཐོས་པ་ནི །

དེ་དག་མི་སྐྲག་དངང་བར་མི་འགྱུར་ཏེ །

9 A संभ्रमित्व ; B सन्त्रसिष्ट ; C संत्रसिसू

10 B भोति

ते ते धरेन्ति वरबोधिसमा[1]
ते ते हि पुत्र अनुजात ममा[2] ।
ते ते ह्युदुम्बर[3]कुसुमसमा-
स्तेषार्थहं चरितु कल्पशतान्[4] ॥८०॥

न पि[5] तस्य अस्ति विनिपातभये[6]
अष्टाक्षणो विगत तस्य सदा ।
द्रक्ष्यन्ति बुद्धनयुतान् सुबहून्[7]
इमु यः समाधि नरु धारयती[8] ॥८१॥

यथ मैत्रको जिनु अनन्तयशाः[9]
सत्त्वान् भेष्यि बहु [10]अर्थकरः ।
तथ व्याकरोम्यहमनन्तमतिं
हस्तस्मि यस्य सुसमाधिवरम्[11] ॥८२॥

1 A धरन्ति वरबोधिमिमां ; B धरन्ति
2 A पुत्र अनुजातमिमा ; C पुत्रमनुजात समः ; Tib. 158b, l. 7.
དེ་དག་རྗེས་སུ་སྐྱེས་པའི་ང་ཡི་བུ །
3 B ते ते ह्रुन्दु०
4 A तेषार्थिहं चरितु कल्पशतां ; B तेसार्थिह्यरितु कल्पसतां ; C ०श्चतुरितु ;
Tib. 158b, l. 7: དེ་ཕྱིར་བསྐལ་པ་བརྒྱར་ཡང་ངས་སྤྱད་དོ །
5 A न च
6 A ०भयं
7 A ०नियुतान् सबहून् ; B नियुता सबहू
8 B इमु य समाधि नरु धार० ; C ०ति
9 B जिन अनन्तयसा
10 B नत्वान भेष्यि बहु ; C सन्धान भेष्यते स्यति स
11 Tib. 159a, l. 2. གང་གི་ལག་ན་ཏིང་འཛིན་མཆོག་ཡོད་པ །

स्मृतिमान् स भोति मतिमान्[1]

ज्ञानोद्गतः[2] श्रुतिधरो भवति[3] ।

प्रतिभानु तस्य भवती विपुलं

इमु यः समाधि नरु[4] धारयती[5] ॥८३॥

देवानां च स[6] भवति पूजनियो[7]

मरुतां च सद नमस्यनीयः ।

अभिरक्षितः सतत देवगणैः[8]

इमु यः समाधि नरु धारयती ॥८४॥

न च सोऽग्निमध्ये म्रियते न जले

न च तस्य शस्त्र क्रमते न विषम् ।

न च वैरिणां गमनियो भवती

इमु यः समाधि नरु धारयती ॥८५॥

वनकन्दरे वसतु तस्य सदा

मरुता करोन्ति वर पारिचरिम्[9] ।

उपस्थायकास्य बहु यक्षशता

इमु यः समाधि नरु धारयती[10] ॥८६॥

1 B मतिमांश्च ; C adds गतिमान्

2 B ज्ञानोत्तवतः

3 B भवती

4 A नयु ; Tib. 159a, l. 4. མི་གང ।

5 B ०यती

6 B स देवान चो ; C देवन चों

7 B & C ०नियः

8 C भूतगणौ

9 A वर परिचरीं

10 A धारति ; B ०यति

ज्ञानेन सागरसमो भवती
　　न सज्जते[1] गुण भणन्तु मुने ।
भूतांश्च[2] बुद्धगुण कीर्तयते
　　इमु यः समाधि नरु धारयती[3] ॥८७॥

नान्तो न चास्य[4] पर्यन्तु श्रुतेन
　　प्रमाणु लभ्यति यथा गगने ।
ज्ञानोल्कु[5] धारि तिमिरं हरती[6]
　　इमु यः समाधि नरु धारयती[7] ॥८८॥

स्निग्ध[8] सुयुक्त सद मुञ्च गिरां[9]
　　पर्षत्सु[10] भाषति सुप्रेमणियाम्[11] ।
सिंहो यथा स विनदं भणती[12]
　　इमु यः समाधि नरु धारयती[13] ॥८९॥

1 A भवति न च सज्जते ; B न च सर्ज्जते ; Tib. 159b, l. 1 : ཐོགས་པ་མེད །=अतिहत ।

2 A भुताश्च ; C भूताश्च ; Tib. 159b, l. 1 :, ཡང་དག་བརྗོད་པར་བྱེད །

3 A धारयति　　4 A वास्य

5 A & B ज्ञानोल्क

6 हरती ; Tib. 159b, l. 2 : རབ་རིབ་སེལ ।

7 A & C ०यति

8 A स्निग्धान्　　9 A & B मुंचि गिरं

10 B पर्षन् स　　11 A ०णीयां ; B ०नीयान्

12 B सिहो यथा सर्विनदं ; Tib. 159b, l. 3 སེང་གེ་བཞིན་དུ་དེ་ནི་སྒྲ་ནམ་ས་སྒྲོག ।

13 A & C ०यति

वैद्यो भिषकु समु सो भवती[1]

गति-लेनु-त्राण-शरणं[2] बहूनाम् ।

आलोकभूतु जगि सो चरती[3]

इमु यः समाधि नरु धारयती[4] ॥९०॥

न च तस्य मैथुनि मनो रमते

शमथे रतः स्पृशति ध्यानसुखम्[5] ।

शान्तां स[6] भाषति प्रशान्त गिरम्

इमु यः समाधि नरु धारयती[7] ॥९१॥

न च तस्य मानसु निमित्त रतं

सर्वे विभावित [निमित्त] पृथु ।

सततं समाहितु विदू भवती[8]

इमु यः समाधि नरु धारयती[7] ॥९२॥

चक्षुश्च सो लभति अप्राकृतकं[9]

येनो स पश्यति अ[न]न्तजिनान् ।

1 A भवति ; B भिषक् सुमु सो भव॰ ; C भिषकट् कुसुम सो भणती ; Tib. 159b, l. 3 : དེ་ཆེ་སྨན་པ་སྨྲུར་མཁན་འདྲ་བར་ཡང །

2 B गतिलेनुत्रानु सरणं

3 A & C भवति

4 A & C ॰यति

5 B रतः स पृसति ध्यानसुखः

6 C शान्ता च ; B सान्ता स

7 A धारयति

8 A विदुचरमि ; B ॰हित विदू चरती

9 C प्राकृतकं

सोऽनन्तचक्षुर्भवति वृषभो[1]
इमु यः समाधि नरु धारयती[2] ॥९३॥
क्रौंचस्वरो मधुरयुक्तगिरो
कलविङ्क-दुन्दुभिस्वरो भवती ।
स गीतियुक्तस्वरु[3] मञ्जुगिरो
इमु [यः] समाधि नरु धारयती[2] ॥९४॥
मेघाभिगर्जितस्वरो[4] भवती
[5]हं[स]स्वरो रवित मञ्जुगिरः ।
पञ्चस्वराङ्गशतयुक्तस्वरो
इमु यं: समाधि नरु धारयती[6] ॥९५॥
बहुकल्पकोटिनयुता[7] विविधा
मधुरस्वराङ्ग-सुप्रयुक्तस्वराः[8] ।
अचिन्तिया स[9] गिर निश्चरती
इमु यः समाधि नरु धारयती ॥९६॥

1 B drops वृषभो ; C भवती......लभे 2 A & C ०यति
3 C संगीतियुक्त स्वर 4 C ०स्वर
5 C adds वृषती , Tib. 160a, l2. ངང་པའི་སྒྲ་དབྱངས་བཞིན་དུ་འཇམ་པར་སྒྲོག ། 6 A drops st. 95.
7 A नियुता , B ०टिनियुतयुतः
8 B ०युक्तगिरः 9 A & B सुअचिन्तियामि ; C ०या सि ; Tib. 160a, l. 3 : སྒྲ་དབྱངས་སྙན་པ་བསམ་གྱིས་མི་ཁྱབ་འབྱུང །

न च भोजने भवति गृध्नुमना[1]
न पात्रचीवररतो[2] भवती ।
अल्पेच्छु सन्तुष्ट सुसंलिखितो[3]
इमु यः समाधि नरु धारयती[4] ॥९७॥
न च आत्म उत्कर्षकु सो भवती
न परस्य भाषति अवर्णु कचित् ।
ध्याने रताः सुखुम[5]चित्तु सदा
इमु यः समाधि नरु धारयती[6] ॥९८॥
आत्मानुप्रेक्षी[7] सततं भवती[8]
न परस्य स्खलितमेषति[9] च ।
अविरुद्धु[10] सर्वि जगि सो भवती
इमु यः समाधि नरु धारयती[11] ॥९९॥
अकिलिष्टचित्तु परिशुद्धचरी
अशठो अवञ्चकु सदा भवती ।
सद मार्दवः सद विमोक्षरतो
इमु यः समाधि नरु धारयती[11] ॥१००॥

1 C ०सदा ; B गृद्धमना  2 B ०चीवरनतो
3 C तस्य अल्पेच्छु असंलिखितो ; Tib. 160a, l. 5: ཡོ་བྱད་སྐྱུངས །
4 B धारयति  5 C सखुम चिन्त ; Tib. 160a, l. 9: ཕྲ་བའི་སེམས །
6 A & B drop st. 98  7 B पेक्षी
8 A भवति  9 C ०स्य स्खलतिमे०
10 B ०रुद्ध  11 A & C ०ति

त्यागाधिमुक्त[1] सततं भवती

मात्सर्यचित्तु न च तस्य रतम् ।

शीलेनुपेतु[2] सततं भवती[3]

इमु यः समाधि नरु धारयती[4] ॥१०१॥

अभिरूपदर्शनीयु प्रेमणीयो

वरकाञ्चनच्छवि[5] प्रभासकरः[6] ।

द्वात्रिंशल्लक्षणधरो भवती[3]

इमु यः समाधि नरु धारयती ॥१०२॥

प्रासादिकश्च[7] सद सो भवती[3]

अभिलक्षितो[8] बहुजनस्य[9] प्रियो ।

प्रेक्षन्त[10] तृप्ति न लभन्ति नरा

इमु यः समाधि नरु धारयती ॥१०३॥

देवास्य नाग तथ यक्षगणा-

स्तुष्टा उदग्राः सद आत्तमनाः ।

1 A & C त्यागदिमुक्त ; see Part 1, p. 30 ; Tib. 160b, l. 1 : རྟག་ཏུ་གཏོང་ལ་ཞེན་ཏུ་མོས་པར་འགྱུར། 2 A drops पेतु

3 A ॰ति

4 A ॰ति ; B drops st. 101

5 C ॰च्छुल॰

6 B ॰भास्कर:

7 A ॰दियश्च

8 C ॰रच्चितो

9 B जनस्य च

10 B प्रेच्च प्रेच्चन्त

भाषन्ति वर्ण प्रविशित्व कुला[1]-

निमु यः समाधि नरु धारयती ॥१०४॥

ब्रह्मा च शक्र[2] वशवर्ति बहु

उपस्थानु तस्य प्रकरोन्ति सदा।

न च तस्य उन्नत[3] मनो भवती[5]

इमु यः समाधि नरु धारयती[4] ॥१०५॥

न च तस्य दुर्गतिभयं भवती[5]

न पि चाक्षणान[6] विनिपातभयम्।

परिमुक्तु सर्व विनिपातभया-

दिमु यः समाधि नरु धारयती[7] ॥१०६॥

न च तस्य कांक्ष विमतिर्भवती[5]

वर बुद्धधर्म श्रुणिया निपुणान्[8]।

गम्भीर ज्ञानानुगतो भवती

इमु यः समाधि नरु धारयती ॥१०७॥

यं यं पि धर्म श्रुणती[9] सुखुमं

सर्वत्र भोति वशिपारगतः।

1 Tib. 160b, l. 5: གྲོང་དུ་ཞུགས་ནས།

2 C प्रह्लाद शक्र 3 A उन्नत्त ; Tib. 160b, l. 6: ཁེངས་པར།

4 B drops st. 105. 5 A & C ०ति

6 A चाचण 7 A & C ०यति

8 A निपुणां

9 A यं कश्चिद्धर्मं शृणुते ; B यं कश्चि धर्म श्रुणती

बलवन्तु हेतुनिपुणो भवती

इमु यः समाधि नरु धारयती[1] ॥१०८॥

एवं प्रभाषित[2] जिनेन गिरा

अहु तेन भोमि परिचीर्ण सदा ।

लभते च धारणि[3] विशिष्ट वरा-

मिमु यः समाधि नरु धारयती ॥१०९॥

कालक्रियां च स करोति यदा[4]

अमिताभु[5] तस्य पुरतः स्थिहती[6] ।

भिक्षुगणेन सह कारुणिको

इमु यः समाधि नरु धारयती ॥११०॥

लाभी च धारणिय सो भवती[6]

धर्मनिधान वशिपारगतः ।

प्रतिभानवाननाच्छेद्यगिरो[7]

इमु[8] यः समाधि नरु धारयती[9] ॥१११॥

1 A & C ०ति
2 B ०षितं
3 B धारिणि
4 B सदा
5 B ०ताभू तस्य
6 C ०ति
7 A ०वाननाच्छेद्यमिना ; B ०वाननाच्छेद्यगिरो
8 A पेमु यः ; B इम यः ; C य इमं
9 A & B add: प्रमुदित विमल प्रभाकरि भूमि अर्चि सुदुर्जय अभिमुख चैव ।
दूरंगम अचल स साधुमतीं भूमी च धर्ममेघ लभते दशमी ॥
आयुं कर्मपरिष्कराधिमुक्तिं प्रणिधि ऋद्धि उपपत्तिबलं च ।
धर्मचित्त तथ ज्ञानमहन्तं दश वशितामिमु शूर लभति ॥

येनैव सो व्रजति धर्मधरो[1]
आलोकभूत भवती जगतः[2] ।
सुप्रशान्तचार सुविशुद्धमना
इमु यः समाधि नरु धारयती[3] ॥११२॥

वर धर्मकोश विविधं[4] निपुणं
सो धर्मकायवशिपारगतः[5] ।
सो संशयं छिनत्ति सर्वजगे
इमु यः समाधि नरु धारयती ॥११३॥

सर्वेपि सत्त्व सिय कारुणिका
भगवान् भवान्तकरणे सुगतः[6] ।
तान् सत्करेय्या बहु कल्पशतान्
यथ गङ्गवालुक तथोत्तरि[7] वा ॥११४॥

यश्चैव पश्चि क्षयकालि इमं[8]
श्रुत्वा समाधिमिह कश्चि नरः ।
अनुमोदमीति भणतैकगिरं
कल पुण्यस्कन्ध न स पूर्व भवेत्[9] ॥११५॥

1 C यनैव स व्रजति धर्मवरो
2 C जग ततः
3 A drops st. 112
4 C विवर'
5 B वसिपार'गतः
6 A कारणा सुगतां ; B सतां
7 B ततोभरि
8 A इयं
9 Tib. 161b, l. 5. སྔ་མའི་བསོད་ནམས་ཕུང་པོས་ཆར་མི་ཕོད། ।

यस्यो कुमार इय शान्तगती[1]
परमार्थशून्यत[2] समाधिवरो ।
प्रावर्तु भोति त[थ पुस्त] गतः[3]
सो धर्मभाणकु स्थितः[4] सुमतिः ॥११६॥

इति श्रीसमाधिराजे तेजगुणराजपरिवर्तो
नामोनविंशतितमः ॥२९॥

1 A & B ०चरी

2 B ०शून्यता ; C शून्य समाधिवरा

3 C प्रावर्थ ; Tib. 161b, l. 5-6: རབ་ཏུ་འདོན་དང་དེ་བཞིན་གླེགས་བམ་བྱས། །

4 B सो धर्मेण कूस्थितः

## त्रिंशपरिवर्तः

अथ खलु भगवान् पुनरेव[1] चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म। तस्मात्तर्हि कुमार य आकाङ्क्षेद् बोधिसत्त्वो[2] महासत्त्वः किमित्यहं सर्वसत्त्वानां रुत[मधिगच्छेयमिन्द्रियाणां च [3]परापरज्ञतां विज्ञाय धर्मं देशयेयमिति। तेन[4] कुमार बोधिसत्त्वेन महासत्त्वेनायं [सर्वधर्मस्वभावसमताविपंचितः] समाधिः [श्रोतव्य उद्ग्रहीतव्यः पर्यवासव्यो] धारयितव्यो वाचयितव्यः [अरणाभावनया] भावयितव्यो[5] बहुलीकर्तव्यः परेभ्यश्च विस्तरेण संप्रकाशयितव्यः।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत[6]।

अपरिमित अतीत नायकास्तेन दृष्टाः
पुरतु कथ[7] प्रयुक्ता पृच्छिता लोकनाथाः।
प्रवरकुशलमूले तिष्ठतो बोधिसत्त्वो
इमु विरजसमाधिं धारयन्[8] मोक्षकामः ॥१॥

लभति सुखप्रणीतं दिव्यमानुष्यकं चो
लभति परमपूजां दिव्यमानुष्यकां सो।

1 A तत्र भगवान् पुनरपि
2 C ०च्चेत् स चेद् बोधि०
3 Tib. 162a, l. 1: དབང་པོ་མཆོག་དང་མཆོག་མ་ཡིན་པ་རྣམ་པར་རིག་ནས་ཆོས་བསྟན།
4 A येन
5 A drops भावयितव्यः; B adds प्रवर्तयितव्य उपदेष्टव्य स्वाध्यातव्यः।
6 A ०मिमां गाथामभा०
7 B कथं
8 B धारये

लभति सुखप्रणीतं ध्यानसौख्यार्यसौख्यम्[1]
इमु विरजसमाधिं धारयन् मोक्षकामः[2] ॥२॥

वर्णु श्रुणिय उदारं[3] हर्षु तस्यो न भोति
न पि च पुनरवर्णे मंकुभावं निगच्छेत्[4] ।

शैलोपमु[5] अकंपेय्या अष्टभिर्लोकधर्मै-
रिमु विरजसमाधिं धारयन् मोक्षकामः ॥३॥

अखिलमधुरवाणी[6] श्लक्ष्णवाचा सुयुक्ता
अपगतभृकुटिश्चो पूर्वे[7] आलापि भोति ।

सततस्मितमुखश्चो शिक्षितो नायकानाम्
इमु विरजसमाधिं धारयन् मोक्षकामः ॥४॥

भवति स सुखवासः[8] सूरतः स्निग्धचित्तो
भवति सद सुदान्तो दान्तभूमिस्थितश्च ।

सुमधुरप्रियवाणी[9] स्निग्धसत्याभिधायी
इमु विरजसमाधिं धारयन् बोधिकामः[10] ॥५॥

न च स कथ करोती वैग्रहीं नो विवादान्[11]
अपगतखिलदोषा वर्जितास्तेन शेषाः ।

1 Tib. 162a, l. 7. བསམ་གཏན་བདེ་དང་འཕགས་པའི་བདེ་བ་མཆོག་ཀྱང་འཐོབ །

2 A drops st. 2

3 A वर्णु श्रुणो उदारऽर्षुतस्यो न ; B वर्णुनियदारं हषु तस्यो न भोती ; C बहु श्रु०

4 A & B ०रवर्ण मंकुभावं निग० ; C निगच्छेत्

5 B सैलपमु अकम्प्यो अष्टभि लोकधर्मं ; C शैलपम

6 A सखिलमधुरभाणि

7 A & B पूर्विं

8 A भवति सुख० ; B & C सुखवासः

9 A भाणि

10 A & B मोत्तकामः

11 A स करोति वैग्रहीं विवादां ; B स करोती वैग्रही नो विवादा

प्रमुदितु सद भोती[1] सूरतो मार्दवश्च
इमु विरजसमाधिं धारयन् बोधिकामः[2] ॥६॥
भवति च सद विद्वां[स्त्यागि] नित्याभियुक्तः
सुदुःखित जन दृष्ट्वा तेषमन्नं ददाति ।
प्रियतरु परित्यक्तुं भोति नित्यं मुदाता[3]
इमु विरजसमाधिं धारयन् बोधिकामः[4] ॥७॥
देवशतसहस्राण स्पृहां ये [सं]जनेन्ती[5]
नाग-असुर-यक्षा नित्युपस्थायकास्य ।
वनि पवनि वसन्ते[6] रक्ष तस्या करोन्ती
इमु विरजसमाधिं यो नरो धारयति[7] ॥८॥
भणि वचनमसक्तं ब्रह्मघोषस्वरोऽसौ
हंसरवित[घोषः] किन्नरोद्गीतघोषः[8] ।
पञ्चशतस्वराङ्गो हर्षणीयस्वरश्चो
भवति नदितशब्दो घुष्टशब्दः सुशब्दः ॥९॥

1 A प्रमुदित सद भोति ; B मार्दवाश्चा
2 A & B मोक्षकामः
3 A प्रियतरु भवित्यक्तु ; C प्रयतरु परित्यक्तुं नाततना चैव भान्ति ; cf. Tib. 162b, l. 6: གཏོང་ལ་ཤིན་ཏུ་དགའ་ཞིང་བདག་ཉིད་སྤྲུད་མི་དགའ །
4 A & B Tib. मोक्षकामः ; B drops st. 7
5 B सहस्रास्तत् स्पृहयेनेन्ती
6 B वनि वसन्ते
7 B ०वारयेन्मोक्षकामः ; A drops st. 8
8 B किन्नरोगीत घोष

यावततु पृथु क्षत्राण नरः[1] कश्चिदेव
सूक्ष्म रज करेय्या शक्यते लक्षणाय[2] ।
ततु बहुतरु तस्यो[3] ये स्वरा निश्चरन्ती
इमु विरजसमाधिं यो नरो धारयति[4] ॥१०॥

इति श्रीसमाधिराजेऽनुशंसापरिवर्तो
नाम त्रिंशतितमः ॥३०॥

1 C ०त्रातान्नरः ; B यावत पृथु त्त्रलान्नान्नरः कश्चिदेवा

2 Tib. 163a, l, 2: ཕྲ་བའི་རྡུལ་དུ་བྱས་པ་ཞེས་པར་ནུས་ཀྱང་ནི །

3 A & C ततु बहुतर तस्या ये स्वरा निश्चरन्ति ; Tib. 163a, l, 2-3:
ཇི་སྙེད་ཞིང་རྣམས་དེ་དག་སྐྱེས་བུ་ལ་ལ་ཡིས །
ཕྲ་བའི་དུལ་དུ་བྱས་པ་ཞེས་པར་ནུས་ཀྱང་ནི །
ཏིང་འཛིན་རྡུལ་བྲལ་མཆོག་འདི་མི་གང་འཛིན་པ་དག །
དེ་ཡི་དབྱངས་སྒྲ་དེ་བས་ཞིན་ཏུ་མང་བར་འགྱུར །

4 A & B & Tib. add दश वशित लभति भूमियो द्वे च अष्टौ
लभति विदु अशेषां बुद्धधर्मानचिन्त्यान् ।
स्पृशति वचनबोधिं सर्वमारान् जिनित्वा
इमु विरजसमाधिं यो नरो धारयति ॥

# एकत्रिंशपरिवर्तः

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म । तस्मात्तर्हि कुमार य आकाङ्क्षेद् बोधिसत्त्वो महासत्त्वः किमित्यहं सर्वधर्माणां स्वभावं[1] कथं जानीयामिति । तेन कुमार बोधिसत्त्वेन महासत्त्वेनायं [सर्वधर्मस्वभावसमताविपंचितः] समाधिः श्रोतव्य उद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्य[2] उद्देष्टव्यः स्वाध्यातव्यः अरणाभावनया भावयितव्यो बहुलीकर्तव्यः[3] परेभ्यश्च विस्तरेण संप्रकाशयितव्यः ।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा[4] अभाषत ।

तस्यो रागु न जातु कुप्यते न च दोषो[5]
तस्यो मोह न जातु कुप्यते[6] वृषभिस्य ।
तेनो[7] सर्वि किलेशु च्छोरितानवशेषा[8]
योऽसौ धर्मस्वभावु जानती[9] सुप्रशान्तम् ॥१॥

1 A सर्वधर्मस्वभावं

2 A adds प्रवर्तयितव्य ; B adds देशयितव्यः उपदेष्टव्यः

3 C ०कुर्वन्तो परेषां च  4 A गाथाम०  5 B दोषा

6 A तस्यो जातु न मोह्व कुप्यते वृषभिस्यो ; B तस्योह न जातु मुप्यते वृभिस्यो ; Tib. 163b, l. 3· ལྷང་བ་མེད། ।  7 C तेने

8 B ०ता अनवशेषा  9 A जानति सुप्रशान्तं ; B सुप्रसान्त

सोऽसौ शिक्ष न जातु ओषिरी[1] सुगतानां
सोऽसौ शुरु[2] न जातु इस्त्रि[या]णां वशमेति[3] ।
सोऽसौ शासनि प्रीति विन्दते सुगतानां
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥२॥
सोऽसौ ज्ञानविधिज्ञ पण्डितो मतिमांश्च[4]
सोऽसौ बुद्ध अनन्त पश्यती[5] अपर्यन्ताम् ।
सोऽसौ धारणि-ज्ञानु जानती अपर्यन्तं
योऽसौ धर्मस्वभावु जानती नययुक्तिम्[6] ॥३॥
सोऽसौ नेह चिरेण भेष्यति[7] द्विपदेन्द्रः
सोऽसौ वैद्यु भिषकु भेष्यते सुखदाता[8] ।
[सोऽसौ उद्धरि श]ल्य सर्वशो दुःखितानां
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥४॥
सोऽसौ आतुरु ज्ञात्व [9]दुःखितानिमि सत्त्वान्
सोऽसौ भेरी सदा पराहनी अमृतस्य ।
सोऽसौ भेष्यति नायको जिनो न चिरेण[10]
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम्[11] ॥५॥

1 A ओसरी ; Tib. 163b,l.3: དེ་ནི་བདེ་གཤེགས་ཁྲུགས་སྲུས་བསླབས་པ་ཡོང་མི་འདོར། 2 Ibid. དབང་པོ།
3 B ॰मेती 4 A मतिमान् 5 A पश्यति
6 A जानति नयमुक्तिं 7 B भेष्यती
8 A ॰भिषं भेष्यति सुखदाता ; B वैद्यु भिषं करेष्यती सुखदाता ; C सुखि॰
9 A सर्वतो दुःखितानां योऽसौ धर्मस्वभावु जानति सुप्रशान्तं
10 A ॰को न चिरेण 11 A & B ॰ति सुप्रशान्तं

सोऽसौ भैषज्यनयेषु कोविदो वरवैद्यो
आदिं[1] जानति सर्वव्याधिनां यत्र मुक्तिः ।
सोऽसौ भूतनयशि[क्षितो मतिमन्तो
शिक्षित्वा बहुसत्त्व मोचयी पृथु नष्टान्[2] ॥६॥
सोऽसौ शून्यनयेषु कोविदो मतिशूरः
सोऽसौ लोकि असक्तु भुंजति सद पिण्डम् ।
सोऽसौ बोधिवराय स्थापयि बहुसत्त्वान्
योऽसौ धर्म]स्वभावु जानती सुप्रशान्तम् ] ॥७॥
सोऽसौ क्षान्तिबलेन उद्गतो नरचन्द्रः[3]
सोऽसौ लोष्टकदण्डताड़ितो न च कुप्यी ।
सोऽसौ छिद्यतु अङ्गमङ्गशो न च क्षुभ्ये[4]
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥८॥
सोऽसौ क्षान्तिबले प्रतिष्ठितो बलवन्तो
सोऽसौ क्षान्तिय वस्तु तादृशो सुप्रशान्तः[5] ।
सोऽसौ क्षान्तिबले न मन्यते मतिशूरो[6]
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम्[7] ॥९॥

1 Mss. आधिं ; Tib. 164a, l. 1. ཐམས་ཅད་ནད་ཀྱི་གཞི་དང་གང་གིས་འཐར་པ་ཤེས། 2 Tib. 164a, l. 2: བསླབས་ནས་ཤིན་ཏུ་འཁྲུམས་པའི་སེམས་ཅན་མང་པོ་འགྲོལ།

3 B मतिचन्द्रो

4 A छिद्यति अङ्गमङ्गशो न च क्षुभ्य ; B च्छिद्यति...क्षुभ्ये

5 Tib. 164a, l. 6: དེ་ནི་རབ་ཏུ་ཞི་བའི་བཟོད་པའི་དངོས་མི་གཏོང་།

6 A & B drop मति ; Tib. 164a, l. 6: དེ་ནི་བློ་དཔའ་བཟོད་པའི་སྟོབས་ལ་རློམ་སེམས་མེད། 7 C अप्रशान्तः

सोऽसौ वस्तु न जातु मन्यते अहु च्छिन्ना[1]
तेनो [सर्वि] भवा [वि]भाविताः सद शून्याः[2] ।
तस्यो संज्ञा प्रहीण सर्वशो निखिलेनो
योऽसौ धर्मस्वभावु जानती[3] सुप्रशान्तम् ॥१०॥

ते ते धर्मस्वभावु देशयी सुप्र[णी]तं
ते ते बोधि स्पृशी अनुत्तरां न चिरेण ।
येषां धर्मस्वभावु गोचरः सुनिध्यप्तो[4]
तेषां दत्तु अनन्त दक्षिणा अपर्यन्ता ॥११॥

सो[5]ऽसौ भाषति सूत्रकोटियो अपर्यन्ता[6]
यथ गंगनदीय[7] बालिकास्ततु भूयः ।
नो चास्यु प्रतिभानु छिद्यते वर्णमाने[8]
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥१२॥

सोऽसौ कल्पसहस्रकोटिशो नयुतानि
ज्ञानेनो सद भोति[9] उद्गतो यथ मेरुः ।
धर्म तस्य क्षयो न विद्यते भणमाने
योऽसौ धर्मस्वभावु जानती[10] सुप्रशान्तम् ॥१३॥

1 C अद्धछिन्ना ; Tib. 164a, l. 6-7: དེ་ནི་བདག་བཅད་སྐམ་དུ་ན་མ་ཡང་སེམས་མི་འགྱུར །

2 C यद शूएडा

3 A जानति

4 Tib. 164b, l. 1: ངེས་རྟོགས་པ །

5 A यो

6 B ॰न्तां

7 A गंगानदी

8 A छियते भणमाणो ; C विद्यते

9 B drops भोति

10 A जानते

विस्तीर्णं विपुलं अचिन्तियं प्रतिभाणं
भोती बोधिवरां गवेषतः सद तस्यो ।
नित्यं भाषति सूत्रकोटियो अपर्यन्ता[1]
योऽसौ धर्मस्वभावु जानती सुप्रशान्तम् ॥१४॥

यं चैते[2] द्विपदोत्तमा जिना भणि धर्मं
सर्वं तं च श्रुणित्व गृह्णती परिपूर्णम् ।
नो वा एकपदेपि [विद्यते] विमतिस्यो
योऽसौ सर्वि अभाव जानती[3] इमि धर्मान् ॥१५॥

सोऽसौ भोति विशिष्ट त्यागवान् सद कालं
भोती[4] दानपतिः सुखन्ददो दुःखितानाम् ।
दृष्ट्वा दुःखित सत्त्व तर्पयी रतनेही[5]
योऽसौ धर्मस्वभावु जानती[6] सद शून्यम्[7] ॥१६॥

सोऽसौ जम्बुध्वजे भविष्यती सद राजा
सत्त्वानां सद सौख्य काहिती अपर्यन्तम्[8] ।
मैत्राये समुपेतु प्राणिनां सद काले[9]
योऽसौ धर्मस्वभावु जानती सद शून्यम्[10] ॥१७॥

1 A & B ०न्तां
2 B यं च ते
3 A जानति
4 A ०ति
5 A रतनेतु ; C तर्पये रमते हि
6 A जानति ; C जानते
7 B शून्याम्
8 B सत्त्वानां सौख्य काहिति , Tib. 165a, ll. 1-2:

དུས་ཀུན་དུ་ཡང་སྲོག་ཆགས་རྣམས་ལ་བྱམས་ལྡན་ཏེ། །
རྟག་ཏུ་མཐའ་ཡས་པ་ཡི་བདེ་བ་བྱེད་པར་འགྱུར། །

9 B सद काले
10 A drops st. 17

पुत्रान्[1] धीतर दासदासियो त्यजी[2] धीरो
हस्तौ पाद[3] शिरांसि स त्यजी तथ राज्यम् ।
नो चालीयति तस्य मानसं वृषभिस्यो
योऽसौ धर्मस्वभावु जानती सद शून्यम्[4] ॥१८॥
अङ्गाङ्ग पुन तस्य छिद्यती[5] यदि कायो
नो तस्य प्रतिहन्यते[6] मनः सुपिनो पि ।
तेनो पूजित भोन्ति नायका द्विपदेन्द्रा
योऽसौ धर्मस्वभावु जानती सद शून्यम् ॥१९॥
तेनो पूजित[7] सर्वि नायका य अतीता-
स्तथ पूजित ये अनागता द्विपदेन्द्राः ।
तेही[8] सत्कृत सर्वि नायका स्थित ये चो[9]
योऽसौ धर्मस्वभावु जानती सद शून्यम्[10] ॥२०॥
सोऽसौ कोश धरेन्ति पण्डितः सुगतानां
सोऽसौ धारणिये[11] प्रतिष्ठितः परमायाम् ।
सोऽसौ भेष्यति [लोक]नायको न चिरेण
यच्छ्रुत्वा इमु सूत्रं धारयेत क्षयकाले ॥२१॥

1 B & C पुत्रा
2 C त्यज्य
3 B हस्तौ च पाद
4 C शान्तम्
5 A पुनरस्य च्छिन्दती
6 C नो तस्य प्रतिकायो
7 B पूजिते भोन्ति स विनायका ; C स्तथ ते पूजित
8 B तेनो
9 B drops चो
10 A drops st. 20
11 A ०णीये

सोऽन्धो नैव कदाचि भेष्यती विदु जातु
नो चो अङ्गविहीनु भेष्यती[1] बहुकल्पान् ।
तेनो अक्षणु अष्ट वर्जिता इमि नित्यं
येनो सूत्रमिदं प्रभाषितं अप्रमुष्टम्[2] ॥२२॥
नासौ दुर्गतिषु गमिष्यति पुन जातु[3]
नित्यं लक्षणधारि भेष्यती अभिरूपः[4] ।
पञ्चो तस्य अभिज्ञ भाविता इमि [नि]त्यं[5]
पुरतः सो सुगतान[6] स्थास्यती सद शूरः ॥२३॥
बहुकान् निर्मित निर्मिणित्वान[7] अयु ज्ञानी
प्रेषती बहुक्षेत्रकोटिषु विनयार्थम्[8] ।
येहि दृष्ट[9] भवन्ति निर्मिता बहु बुद्धाः[10]
तेही बोधिवराय[11] स्थापिता बहु सत्त्वाः ॥२४॥
स्मृतिमन्तः गतिमन्तः[12] प्रज्ञावान् धृतिमांश्च
स्थाम्ना[13] वीर्यबलेन सो सदा समुपेतः[14] ।

1 B भेयति
2 C सुभाषितं अप्रसृष्टं
3 B नो सौ दुर्गतीषु गमिष्यती नुन जातु ; C अनुजातु ; Tib. 165b, l. 1: ནམ་ཡང །=never.
4 A & B ०धारी भेष्यते अभिरूपं
5 B पञ्चो तस्य भिज्ञ भाविता ; Mss. इमित्य ; Tib. 165b, l. 2: རྟག་རྟག་པར །
6 A ०नस्य ; C पुरुतः
7 A & B बहुकां निर्मित ; C बहुक निर्मिणि
8 B विनियार्थं ; C कोटियेषु विनुयार्थं
9 B येही दृषु
10 C ०ता अम तस्यो
11 A बोधिवारा ये
12 मन्तः evidently for मान्
13 B स्थासु
14 A वीर्येण वलेन यो समुपेतः ; C सदा अपेतः

धर्मपारमि प्राप्तु[1] भेष्यति महतेजा
यः श्रुत्वा [इमु] सूत्र धारयेत् क्षयकाले[2] ॥२५॥
रश्मिकोटिसहस्र निश्चरी सद तेषां
व्योमाः[3]सर्वि करोन्ति मण्डलाः सुरियाणाम् ।
येही भावित भोन्ति[4] शून्यका इमि धर्मा-
स्ते ते शूर भवन्ति नायका न चिरेण ॥२६॥
एषो गोचरु शान्तु भावियो मय[5] पूर्वं
बहुकल्पान सहस्रकोटियो नियुतानी[6] ।
वीर्यं मे न कदाचि सहसित इह मार्गे
यदहं[7] दीपंकरेण व्याकृतो जिनभूमी ॥२७॥
यूयं पी मम चर्या शिक्षथा इह सूत्रे
गम्भीरा परमार्थ देशिता इय नेत्री ।

1 A प्राप्नु ; B भेष्यती
2 A & B & Tib. add
सोऽसौ ब्राह्मविहारि सुस्थिता भवि शूरो
सोऽसौ क्षिप्र लभ्यति भूमि दुवि अष्टौ ।
सोऽसौ निर्जिनि मारकोटिशो लघुलघ्वेव
योऽसौ शान्त समाधि धारयती क्षय[काले] ॥
वशितेहि समुपेत उद्गतु बलवन्तो
सोऽसौ सत्त्वहितार्थि उद्यतो सद सत्त्वो ।
सोऽसौ बोधिवटस्मि बुध्यते वरबोधिं
योऽसौ शान्तसमाधि भावयी इमु नित्यम् ॥
3 B ध्यानाः
4 A शान्ति
5 A मयि पूर्वं ; C भावियो मय पूर्वं
6 A नियुतानि
7 B तदहं

यत्नोमी बहु तस्म[1] तीर्थिका विपरीता
क्षिप्त्वा बोधिमुपायि भैरवे प्रपतन्ति[2] ॥२८॥
बहुकल्पान सहस्रकोटियो नयुतानि
वेदित्वा अमु तत्र वेदना कटु तीव्राः ।
बहु कल्पा नयुतानमत्ययात्[3] पुनरेव
हेतुः सो अमृतस्य प्राप्तये भविष्यते[4] ॥२९॥
[ये ते पश्चिमि] कालि भैरवे सुगतस्यो
रक्षन्ति[5] इमु सूत्रमीदृशं प्रशान्तम्[6] ।
तेषां बोधिवरा न दुर्लभा इय श्रेष्ठा
ते ते पश्चिमि[7] कालि व्याकृत [धरि[8] धर्मान्] ॥३०॥

इति श्रीसमाधिराजे सर्वधर्मस्वभावनिर्देशपरिवर्तो
नामैकत्रिंशतिमः ॥३१॥

1 A & B नष्ट ; Tib. 166a, l. 4:
འདི་ཁ་གྱུ་སྟེགས་ལོག་པ་མང་པོ་འདི་དག་འཁྲུམས ।=संक्रमो बहु अत्र

2 B ०धिमुपयि भैरवे प्रपतन्ती

3 A नियुतान अत्ययात् पुनरेवा हि तु ; B ०कल्पान्नियुतान अत्ययात्

4 A & B भवितेषां ; Tib. 166a, l. 6: དེ་ན་དེ་དག་མི་འཆི་ལ་ཐོབ་པའི་རྒྱུར་འགྱུར་རོ ।

5 B & C ०न्ती

6 A सुप्रसन्नाः

7 A C पश्चिम ;

8 B परिधर्मान्

## द्वात्रिंशपरिवर्तः

[1]अथ खलु भगवान् पुनरेव चन्द्रप्रभं [कु]मारभूतमामन्त्रयते स्म। तस्मात्तर्हि कुमार[2] बोधिसत्त्वेन महासत्त्वेन[3] महाभिज्ञापरिकर्म [धार]यितुकामेनायं[4] समाधिर्धारयितव्यः उद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः उद्देष्टव्यः स्वाध्यातव्यो भावयितव्यः परेभ्यश्च[5] विस्तरेण संप्रकाशयितव्यः। कतमच्च तत् कुमार सर्वधर्माणामभिज्ञापरिकर्म यदुत[6] सर्वधर्माणामपरिग्रहः[7] अपरामर्षः शीलस्कन्धस्यामन्यना[8] समाधिस्कन्धस्य अप्रचारः प्रज्ञास्कन्धस्य विवेकदर्शनं विमुक्तिस्कन्धस्य यथाभूतदर्शनं विमुक्तिज्ञानदर्शनस्कन्धस्य स्वभावशून्यतादर्शनं सर्वधमाणाम्।[9] यथाभिज्ञया समन्वागतो बोधिसत्त्वो महासत्त्वः सर्वसमाधिविकुर्वितानि विकुर्वन् [सर्व][10]सत्त्वान धर्मं देशयति। इदमुच्यते कुमार[11] महाभिज्ञापरिकर्मेति।

1 A तत्र भगवान् पुनरपि; B तत्र खलु भगवान् पुनरपि चन्द्रप्रभकुमारभूतमामन्त्रयते स्म।

2 A कुमार तेन

3 A & B add सर्वधर्माणां

4 B °महाभिज्ञपरिकर्म सोधयितुकामेनायं सर्वधर्मस्वभावविपञ्चितः कामेनायं

5 A स्वाध्यातव्योऽरणाभावनया भावयितव्यो बहुलीकर्तव्यः परे°; B समाधिर्धारयितव्यो वाचयितव्यो पर्यवाप्तव्यः प्रवर्तयितव्यः देशयितव्यः उपदेष्टव्यः स्वाध्यातव्यः अरणाभावनया भावयितव्यो बहुलीकर्तव्यः परे°

6 A drops सर्वधर्माणामभिज्ञापरिकर्म यदुत

7 B सर्वधर्माणानपरिग्रहः।

8 A °मन्यना°; B अमन्यना

9 A & B drop स्वभावशून्यतादर्शनं सर्वधर्माणां

10 B drops सर्वं

11 B adds सर्वधर्माणां

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत[1] ।

महाभिज्ञापरिकर्म अविवादेन देशितम्[2] ।
विवादे यस्तु चरति सोद्गृह्णन्[3] न विमुच्यते ॥१॥

अभिज्ञा तस्य सा प्रज्ञा बौधं[4] ज्ञानमचिन्तियम् ।
उद्ग्रहे यः स्थितो भोति ज्ञानं तस्य न विद्यते ॥२॥

बह्वोऽचिन्तिया धर्मा ये शब्देन प्रकाशिताः ।
यस्तत्र निविशेच्छब्दे सन्धाभाष्यं न जानति ॥३॥

[5]सन्धाभाष्यमजानानः किं सन्धाय तु भाषितम्[6] ।
अधर्मं [भाषते धर्मं[7]] धर्मतायामशिक्षितः ॥४॥

लोकधातुसहस्रेषु ये मया सूत्र भाषिताः ।
नानाव्यञ्जन एकार्था न शक्यं परिकीर्तितुम् ॥५॥

1 A & B वेलायां चन्द्रप्रभस्य कुमारभूतस्येमं सर्वधर्माणां महाभिज्ञापरिकर्म-निर्देशं धर्मपर्यायं गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म ।

2 B अविवादे सितं ; Tib. 167a. l. 3: རྩོད་པ་མེད་པར་བསྟན་པ་སྟེ །

3 नोद्गृह्णात् स ; Tib. 167a, l. 3: འཛིན་པར་བྱེད་པ་དེ་མི་ཐར །

4 C तस्य पञ्चैते बोधं ; Tib. 167a, l. 4: མངོན་ཤེས་དེ་ཡི་ཤེས་རབ་དེ །
སངས་རྒྱས་ཡེ་ཤེས་བསམ་མི་ཁྱབ །

5 B सत्त्वाभाष्य ; Tib. 167a, l. 5-6:
ཅི་ལ་དགོངས་ཏེ་བཤད་པ་ཡི ། དགོངས་པ་དག་ནི་མི་ཤེས་པ །
ཆོས་ཉིད་ལ་ནི་མ་བསླབས་པས ། ཆོས་མ་ཡིན་པ་ཆོས་སུ་འཆད །

6 B किं सत्त्वाये तु भाषितं

7 B drops धर्मं

एकं पदार्थं चिन्तेत्वा[1] सर्वे ते भोन्ति भाविताः[2] ।
यावन्तः सर्वबुद्धेहि बहुधर्माः[3] प्रकाशिताः ॥६॥
नैरात्म्यं सर्वधर्माणां ये नरा अर्थकोविदाः ।
अस्मिन् पदे तु शिक्षित्वा बुद्धधर्मा [4]न दुर्लभाः ॥७॥
सर्वधर्मा बुद्धधर्मा धर्मतायां य शिक्षिताः ।
ये धर्मतां प्रजानन्ति न विरोधेन्ति[5] धर्मताम् ॥८॥
सर्वा वाग् बुद्धवागेव[6] सर्वशब्दो ह्यवस्तुकः[7] ।
दिशो दश गवेषित्वा बुद्धवाग् नैव लभ्यते ॥९॥
एषा वाचा बुद्धवाचा गवेषित्वा दिशो दश ।
न लभ्यतेऽनुत्तरैषा न लब्धा[8] न च लप्स्यते ॥१०॥
अनुत्तरा बुद्धवाचा[9] [बुद्धवाचा] निरुत्तरा ।
अणुर्न लप्स्यतेऽत्वेति[10] तेनोक्तेयमनुत्तरा ॥११॥

1 B एवं पदार्थं चिन्तेत्वा
2 B भाषिता
3 B यावन्त सर्वबुद्धो हि बहुधर्मा
4 B drops न
5 A & B न ते रोधन्ति
6 A सर्ववस्तुषु वागेव ; B सर्वबुद्धवागेव
7 B ०शब्दो हु व० ; Tib. 167b, l. 3: སྒྲ་ཀུན་དངོས་པོ་མེད་པ་སྟེ །
8 C न बुध्यतेऽनुत्तरैषा न बुद्धा
9 C ०भावा ; B अनुत्तरायां बुद्धवाचा
10 B अनुलभ्यतेत्वेति ; Tib. 167b, l. 4-5:
སངས་རྒྱས་ཚིག་ནི་ཟླ་ན་མེད ། ལྷག་ན་མེད་པ་སངས་རྒྱས་ཚིག །
དེ་ལ་རྡུལ་ཙམ་མི་རྙེད་པས ། དེ་ཚེ་ཟླ་ན་མེད་ཅེས་བརྗོད །
ཆོས་ནི་རྡུལ་ཙམ་མི་རྙེད་དེ ། རྡུལ་ཙམ་སླར་ནི་བཤད་པ་ཡིན །

अणु नोत्पद्यते धर्मो अणुशब्देन देशितः ।
अणुमात्रो न चो लब्धो लोके शब्देन देशितः ॥१२॥
अलब्धिर्लब्धधर्माणां [लब्धौ] लब्धिर्न[1] विद्यते ।
य एवं धर्म जानन्ति बुध्यन्ते [बोधिमुत्तमाम्] ॥१३। ।
ते बुद्धानुत्तरां [बोधिं][2] धर्मचक्रं प्रवर्तयी ।
धर्मचक्रं प्रवर्तित्वा बुद्धधर्मान् प्रकाशयी ॥१४॥
बोधिसत्त्वाश्च बुध्यन्ते बुद्धज्ञानमनुत्तरम् ।
तेन बुद्धा इति प्रोक्ता बुद्धज्ञाना प्रबोधनात ॥१५॥
अभावो[3] अप्रणिहितमनिमित्तं[4] च शून्यता ।
एभिर्विमोक्षद्वारेहिद्वारं बुद्धः[5] प्रकाशयी ॥१६॥
चक्षुः श्रोत्रं च घ्राणं च जिह्वा कायो मनस्तथा ।
एते शून्याः स्वभावेन संबुद्धैः संप्रकाशिताः ॥१७॥
एतादृशानां धर्माणां स्वभावं यः प्रजानति ।
नासौ विवादं कुरुते ज्ञात्वा धर्माण लक्षणम् ॥१८॥
एष[6] गोचरु शूराणां बोधिसत्त्वान तायिनाम् ।
न ते कदाचित् काङ्क्षन्ति जानन्ते[7] धर्मशून्यताम् ॥ १९

1 B अलब्धिधर्माणां लब्धालब्धि न
2 B ०नुत्तरान् बोधि
3 A अभाव ; Tib. 168a, l. 2:
དངོས་མེད་སྨོན་པ་མེད་པ་དང། མཚན་མ་མེད་དང་སྟོང་པ་ཉིད།
4 B & C ०मानिमित्तं
5 B drops बुद्धः
6 A & B एषो
7 C जानन्ति

धर्मस्वभावं जानाति बुद्धस्तेनोच्यते हि सः ।
बोधये विनयी सत्त्वानप्रमेयानचिन्तियान्[1] ॥२०॥
यः कृतो[2] बुद्धशब्देन शीलशब्देन[3] सो कृतः ।
शीलशब्दो बुद्धशब्द उभौ[4] तावेकलक्षणौ ॥२१॥
यावन्तः कीर्तिताः शब्दा हीन-उत्कृष्ट-मध्यमाः ।
समाहितैकशब्देन [बुद्ध]शब्देन देशिताः[5] ॥२२॥
न बुद्धधर्मा देशस्था न प्रदेशस्थ कीर्तिताः ।
न चोत्पन्ना निरुद्धा वा एकत्वे न पृथक् तथा[6] ॥२३॥
न ते नवाः पुराणा वा न तेषामस्ति मन्यनाः[7] ।
न च नीला न पीता[8] वा नावदाता न लोहिताः ॥२४॥
अनाभिलाप्या अग्राह्या एवं घोषेण देशिताः ।
न च घोषस्य सा भूमिः प्रातिहार्यं मुनेरिदम् ॥२५॥
अनास्रवा हि ते धर्मा....नेन उच्यन्ति हि ।
स्तृता अपर्यापन्ना दशदिशे एषा बुद्धान देशना[9] ॥२६॥
परिनि[र्वृ]तस्य बुद्धस्य दृश्यते बुद्धविग्रहः ।
तत्स्थानं मनसीकुर्वन् प्रातिहार्यं स पश्यति ॥२७॥

1 C सत्त्वाधर्मधातुमचिन्तियान
2 C सत्कृतो
3 B drops शीलशब्देन सो कृतः ; C शोलशब्दस्य
4 B उभा
5 B समाहिते एके शब्दा न बुद्धज्ञान न ससिताः.
6 B पृथकथा ; Tib. 168b, l. 1:

སྐྱེས་དང་འགགས་པ་མ་ཡིན་ཏེ། དེ་བཞིན་གཅིག་དང་ཐ་དད་མིན།

7 B मन्यता
8 B नच नी व पी०
9 A & B & Tib. drop st. 26

न चासौ लभ्यते सत्त्वो निर्वृतिर्येन स्पर्शिता[1] ।
एवं च[2] देशितो धर्मो बहवः सत्त्व मोचिताः ॥२८॥
यथा चन्द्रश्च सूर्यश्च [3]कांसपात्रीय दृश्यते ।
न च याति स्वकं बिम्बमेवं[4] धर्माण लक्षणम् ॥२९॥
प्रतिभासोपमा धर्मा यैर्हि ज्ञात्वा[5] स्वभावतः ।
नैव ते रूपकायेन पश्यन्ते बुद्धविग्रहम्[6] ॥३०॥
अविग्रहो ह्ययं धर्मो विग्रहो नात्र कश्चन ।
अविग्रहश्च यो धर्म[7] एष बुद्धस्य विग्रहः ॥३१॥
धर्मकायेन पश्यन्ति ये ते[8] पश्यन्ति नायकम् ।
धर्मकाया हि संबुद्धा एतत् संबुद्धदर्शनम् ॥३२॥
प्रतीत्य प्रतिनिर्दिष्टा अप्रति प्रतिदेशिताः ।
इमां गतिं विजानीत श्रामण्येन हि येऽर्थिकाः[9] ॥३३॥
अप्राप्ति [प्राप्ति] निर्दिष्टा सत्त्वानां ज्ञात्व आशयम् ।
यो सन्धाभाष्योत्तरते न सो केन विहन्यते[10] ॥३४॥

1 A देशिता ; B येन दर्शिता ; Tib. 168b, l. 4:
གང་གིས་མྱ་ངན་འདས་རིག་པ། སེམས་ཅན་དེ་ནི་མི་རྙེད་དེ།

2 A सं
3 A कात् स ; B कान् स०
4 B विश्वमे०
5 A येहि ज्ञाताः ; B ये हि ज्ञाता
6 A ०विग्रहाः
7 B ०ग्रश्च यो धर्मो
8 C ये ये
9 Tib. 169a, l. 1:
རྟེན་ཅིང་སོ་སོར་བསྟན་པ་སྟེ། སོ་སོ་མ་ཡིན་སོར་བཤད།
དགེ་སྦྱོང་ཉིད་ནི་སུ་འདོད་པ། འཇུག་པ་འདི་ནི་རིག་པར་གྱིས།
10 A & B & Tib. drop st. 34

यस्य भोति मया प्राप्तमप्राप्तं तेन चोच्यते[1] ।
येन श्राम[ण्यम]प्राप्तं तेन श्रमण उच्यते ॥३५॥
कथं गम्भीरिमे[2] धर्मा वक्ष्यन्ते ये न शिक्षिताः ।
ते च गम्भीरनामेन न शक्यं परिकीर्तितुम्[3] ॥३६॥
अवस्तुकाः पञ्चस्कन्धा अभूत्वा एत उत्थिताः ।
नात्र उत्थाप्यको ह्यस्ति[4] यस्य स्कन्धाः समुत्थिताः ॥३७॥
यल्ल[क्षणाः पञ्चस्कन्धाः] सर्वधर्मा[स्तल्लक्षणाः] ।
तल्लक्षणास्ते निर्दिष्टा लक्षणं च न[5] विद्यते ॥३८॥
यथान्तरीक्षं गगनमेवं धर्माण लक्षणम् ।
पूर्वान्तमपरान्तं च[6] प्रत्युत्पन्नं च पश्यतः ॥३९॥
अग्राह्यं गगनं प्रोक्तं ग्राह्यमत्र न लभ्यते ।
एष स्वभावो धर्माणामग्राह्यो गगनोपमाः ॥४०॥
एवं च देशता धर्मा न श्रावको[7] विपश्यति ।
यश्चो न पश्यती[8] धर्मं तस्य धर्मा[9] अचिन्तियाः ॥४१॥
अस्वभावा इमे धर्माः स्वभावैषां न लभ्यते ।
योगिनां गोचरो ह्येष ये युक्ता बुद्धबोधये ॥४२॥

1 B मया वाप्तं तेन चोच्यते
2 B ०र इमे
3 Tib. 169a l. 2-3:
སུ་དག་བསླབས་པར་མ་གྱུར་པ། ཟབ་མོའི་ཆོས་འདི་ག་ལ་སྨྲ།
དེ་དག་ཟབ་མོའི་མིང་དུ་ཡང་། ཡོངས་སུ་བརྗོད་པར་མི་ནུས་སོ།
4 A & B ०प्यको प्यस्ति
5 A न च ; B लक्षणाश्च न
6 B पूर्वान्तापरान्तश्च
7 C न चाश्राको
8 B & C पश्यतौ
9 B धर्मौ

य एवं जानाति धर्मान् स [न] धर्मेषु सज्जते[1] ।
असज्जमानो धर्मेषु धर्मसंज्ञा प्रबोधयी[2] ॥४३॥
विभाविताः सर्वधर्मा बोधिसत्त्वेन तायिना ।
धर्मसंज्ञा विभावित्वा[3] बुद्धधर्मान्न[4] मन्यते ॥४४॥
अमन्यना हि सा कोटी[5] कल्पेत्वा कोटि व्याहृता[6] ।
य एवं कोटिं जानाति[7] कल्पकोटिन्न[8] मन्यते ॥४५॥
पुरिमां कोटि कल्पित्वा बालः संसारि[9] संसरि ।
न चास्य लभ्यते स्थानं गवेषित्वा दिशो दश ॥४६॥
शून्यं ज्ञात्वा च[10] संसारं बोधिसत्त्वो न सज्जते[11] ।
चरन्ति चैव बोध्यर्थं चरिस्तेषां न लभ्यते ॥४७॥

1 A लभ्यते

2 B ०धय ; Tib. 169b, l. 2 · ཆོས་ཀྱི་འདུ་ཤེས་རབ་ཏུ་རྟོགས །

3 B विभात्वा

4 A बुद्धो धर्मान्न

5 A कोटिः , B अमन्यिना हि सा कोटी ; Tib. 169, l. 3-4:
མཐའ་དེ་རློམ་སེམས་མ་བྱས་པ །བཏགས་ནས་མཐར་ནི་བཤད་པ་སྟེ །
དེ་ལྟར་མཐའ་ནི་སུས་ཤེས་པ ། བསྐལ་པ་བྱ་བར་རློམ་སེམས་མེད །

6 A & B व्याकृता

7 B कोटि जा०

8 A ०कोटिन्न ; B ०कोटी न

9 A संसार संसरी ; B पुरिमा कोटि कल्पित्वा बाल संसार ; C कोटि कल्पान् वा वाच

10 A हि ; B दि

11 A ०रं न सज्जते जिनौरसाः ; B ०रन्न सज्जन्ते जिनौरसा ; Tib. 169b, l. 5:
འཁོར་བ་སྟོང་པར་རིག་ནས་ནི། རྒྱལ་བའི་ཐུགས་སྲས་ཆགས་མི་འགྱུར
བྱང་ཆུབ་དོན་ཕྱིར་སྤྱོད་མོད་ཀྱི ། དེ་དག་སྤྱོད་པ་མི་རྙེད་དོ །

शकुनानां यथाकाशे पदं तेषां न लभ्यते ।
एवंस्वभावा सा बोधिर्बोधिसत्त्वैश्च[1] बुध्यते ॥४८॥
यथा मायां विदर्शेंति[2] मायाकारः सुशिक्षितः ।
नानाप्रकाररूपाणि[3] न च रूपोपलभ्यते ॥४९॥
अलब्धि[लब्धि]र्नो मन्ये लब्धे लब्धि र्न[4] विद्यते ।
मायोपमं च तज्ज्ञानं न मायायां च तत्[5] स्थितम् ॥५०॥
एवं शून्येषु धर्मेषु बालबुद्धिं विकल्पयेत्[6] ।
विकल्पे चरमाणानां गत[यः] षट् परायणाः[7] ॥५१॥
जातिजरोपगाः सत्त्वा[8] जातिस्तेषां न क्षीयते ।
जातिमरणस्कन्धानां दुःखं तेषामनन्तकम् ॥५२॥
दुःखो हि जातिसंसारो बालबुद्धीहि कल्पितः[9] ।
कल्पास्तेषां न क्षीयन्ते कल्पकोट्यश्च संसरी ॥५३॥
अयुक्ताः संप्रयुक्ताश्च कर्मयोगस्मि ते[10] स्थिताः ।
कर्मणस्ते न मुच्यन्ते कर्मोपादानि ये[11] रताः ॥५४॥

1 C ०सत्त्वश्च ; B स बोधिसत्त्वस्य    2 A निदर्शेति ; B निर्देसति
3 A & B नानारूपप्रकाराणि
4 A लब्धौ लब्धिर्न ; B अलब्धि लब्धिनो मन्ये लब्धे लब्धि न ; C लब्धिर्तेषां
5 B न च मायाय तत् स्थितं ; C न च मायाय तं
6 B ०द्धी विकल्पिय ; C ०द्धीभि कल्पियः
7 B पारायनाः ; C ०णम्    8 B जातीजरोपगाः सर्वाः
9 A ०बुद्धिविक०    10 A & B ये
11 A कर्मोपादानि ये ; C कर्मपादानि ते

कर्मौघे[1] वाहृतान्तेषां कर्म न क्षीयते सदा ।
पुनः पुनश्च म्रीयन्ते मारपक्षे स्थिताः सदा[2] ॥५५॥
माराभिभूता दुष्प्रज्ञाः संक्लिष्टेन हि[3] कर्मणा ।
अनु[भो]न्ति जातिमरणं[4] तत्र तत्रोपपत्तिषु ॥५६॥
भरणं ते निगच्छन्ति अन्धा बालाः पृथग् जनाः ।
हन्यन्ते च विहन्यन्ते गतिश्चैषां न[5] भद्रिका ॥५७॥
परस्परं च घातेन्ति शस्त्रेभिर्बालबुद्धयः[6] ।
एवं प्रयुज्यमा[ना]नां दुःखं तेषां प्रवर्धते ॥५८॥
पुत्रा मह्यं धनं [मह्यं] बालबुद्धीहि कल्पितम्[7] ।
असतं[8] [कर्म] कल्पित्वा संसारो भूयु[9] वर्धते ॥५९॥
संसारं वर्धयन्तस्ते [10]संसरन्ति पृथग्जनाः ।
[पृथक्] पृथग् च[11]गच्छन्ति तेन चोक्ताः पृथग्जनाः ॥६०
पृथुधर्मा[12] प्रवक्ष्यन्ति उज्झित्वा बुद्धशासनम् ।
न ते मोक्षं लभिष्यन्ति मारस्य वशमागताः ॥६१॥

1 A न कर्म ; B कामौघेनोद्वृत्तान् ; C कर्मौघेनाहृभा०
2 A मारपक्षस्थिता हि ये ; B ०पक्षे स्थिता
3 A drops हि
4 B जाति० ; C अनन्ति जाती०
5 B गति तेषान्नगतिस्तेषाना
6 B घातेति सस्तेभिबाल०
7 A ०बुद्धिविकल्पितं ; B मह्यत्तनं मह्यि बालबुद्धीहि कल्पित
8 B ससन्त
9 B तूर्यं
10 B संसारं वर्धतोस्तेसं सं०
11 B drops पृथक् च ; C पृथग् न
12 A पृथून् धर्मान् ; B पृथक् धर्मान्

कामानां कारणं बालाः स्त्रियं सेवन्ति पूतिकाम् ।
पूतिकां गति गच्छन्ति पतन्ते [ते]न दुर्गतिम् ॥६२॥
कामान्न बुद्धा वर्णेन्ति नापि स्त्रीणां निषेवणम् ।
महाभयोऽहि पाशोऽयमिस्त्रिपाशः सुदारुणः ॥६३॥
विवर्जयन्ति तं धीरा[1]श्चण्डमाशीविषं यथा ।
न विश्वसन्ति इस्त्रीणां नैष मार्गो हि बोधये ॥६४॥
भावेन्ति बोधिमार्गं च [2]सर्वबुद्धैर्निषेवितम् ।
भावयित्वा च तं मार्गं भोन्ति बुद्धा अनुत्तराः[3] ॥६५॥
अनुत्तराश्च ते[4] [युक्ता]भोन्ति लोकस्य चेतियाः ।
अनुत्तरेण ज्ञानेन बुद्धा भोन्ति[5] अनुत्तराः[6] ॥६६॥
पोषधं च निषेवन्ति शीलस्कन्धे समादपी ।
समादपेन्ति बोधाय सत्त्वकोटीरचिन्तियाः ॥६७॥
कुर्वन्ति तेऽर्थं सत्त्वानामप्रमेयमचिन्तियम् ।
ते ते शूरा महाप्रज्ञा [7]ताडेन्त्यमृतदुन्दुभिम् ॥६८॥
कम्पेन्ति मारभवनं चालेन्ति[8] मारकायिकान् ।
समादपेन्ति[9] बोधाय मारकोटीरचिन्तियाः[10] ॥६९॥

1 B ते पीरा
2 A & B पूर्व॰
3 A अनुत्तमाः
4 A & C drop युक्ता
5 A & B भोन्ति बुद्धा
6 B ॰त्तरायाः
7 A ॰स्ताड्यं स्यमृत ; B स्तान्त्यन्तनृत॰
8 A ॰भवनांश्चालेन्ति ; B ॰भावनां चालेन्ती
9 A समादयान्ति
10 B ॰न्तियां

परवादीन्निगृह्णन्ति निर्जिनन्ति च तीर्थिकान्[1] ।
कम्पेन्ति वसुधां सर्वां ससमुद्रां सपर्वताम् ॥७०॥
विकुर्वमाणा कायेभिरनेकर्धिविकुर्वितैः ।
निदर्शेन्ति[2] महाप्रज्ञाः प्रातिहार्यानचिन्तियान् ॥७१॥
क्षेत्रकोटी प्रकम्पेन्ति यथा गङ्गाय वालिका[3] ।
पराजिनित्वा ते मारा बोधिं बुध्यन्त्यनुत्तराम्[4] ॥७२॥
निर्मिण्वन्ति[5] च ते वृक्षान् रतनैः सुविचित्रितान्[6] ।
फलपुष्पेहि संयुक्तान् गन्धवन्तान्[7] मनोरमान् ॥७३॥
प्रासादांश्च विमानानि[8] कूटागारान् सहर्षिकान् ।
निर्मिण्वन्ति[9] च ते शूराः पुष्करिण्यो मनोरमाः ॥७४॥
अष्टाङ्गजलसम्पन्नाः स्वच्छाः शीता[10] अनाविलाः ।
पिबन्ति ये[11] ततो वारि तिस्रस्तृष्णा[12] जहन्ति ते ॥७५॥
अविवर्त्यांश्च ते भोन्ति पीत्वा वारि निरुत्तरम्[13] ।
अनुत्तरेण ज्ञानेन भोन्ति बुद्धा अनुत्तराः ॥७६॥

1 B ०कां
2 B निर्देशति ; C निर्देशन्ति
3 A बालुका
4 A मारान् भोन्ति बुद्धा महायशाः ; B पराजिनिर्वा ते मारां भोन्ति बुद्धा महायशाः
5 A निर्मिणोन्ति ; B निर्मितोश्चन्ति
6 B वृक्षा रतनैः सुविचित्रितां
7 A ०भिसंकीर्णा गन्धमन्तान् ; B सम्पन्नगन्धमन्तो मनो०
8 B ०दाश्च मानानि
9 A निर्मिणन्ति
10 B अच्छाः सी०
11 B & C ते
12 Tib, 171a, l 7: སྲིད་པ་གསུམ་ཡང་སྤོང་བར་འགྱུར །
13 B ०त्तरां

अनुत्तरां गतिं शान्तां गच्छन्तीति विजानथ ।
इमां गतिमजानन्तः प्रनष्टाः सर्वतीर्थिकाः[1] ॥७७॥
ते च तद्गतिकाः[2] सत्त्वा ये तेषां भोन्ति निश्रिताः[3] ।
पतिष्यन्ति महाघोरामवीचिमपरायणाः ॥७८॥
यास्तत्र वेदना घोरा[4] न शक्यास्ताः प्रकीर्तितुम्[5] ।
अहं च ताः[6] प्रजानामि बोधिसत्त्वाश्च तायिनः ॥७९॥
ये चेह धर्मे कांक्षन्ति[7] एवं गम्भीरि दुर्दृशे[8] ।
अभूमिस्तत्र[9] बालानामुपलंभस्मि ये स्थिताः ॥८०॥
निर्मिण्वन्ति[10] वियूहांस्ते नैकरूपनिदर्शनात्[11] ।
येन ते सर्वि गच्छन्ति बुद्धक्षेत्राननुत्तरान्[12] ॥८१॥
यावन्त्यो[13] बुद्धक्षेत्रेषु रूपनिर्हारसंपदः ।
सर्वास्ता इह दर्शेन्ति बोधिसत्त्वा महर्द्धिकाः ॥८२॥
महाधर्मेण[14] सन्नद्धा महावीरा महाबलाः ।
महाशून्यार्थ-वज्रेण प्रहाराणि ददन्ति ते ॥८३॥
रश्मिकोटिसहस्राणि यथा गङ्गाय वालिका[15] ।
कायतो निश्चरन्त्येषां येभिर्लोकः प्रभासते[16] ॥८४॥

1 A औपलंभिकाः ; B गतिम्बिजानन्तः प्रनष्टा औपलम्भिकाः
2 B तद्भागिकाः
3 B निःश्रृताः
4 A वेदनास्तीव्रा ; B या तत्र वेदना तीव्रा
5 B न संकृताः परिकीर्तितां
6 B तां
7 B धर्मे काङ्क्षान्ति
8 A & B गम्भीर दु० ; C दुर्दशे
9 A ०र्यत्र ; B अभूमि यत्र बालामु०
10 A निर्मिणोन्ति ; B निर्मिश्वन्ति
11 A ०दर्शनान् ; B निदर्सतानां
12 C ०त्त्रेत्रा अनूत्तराम्
13 B यावन्तो
14 C महावर्षेण
15 A बालुकाः
16 B प्रभास तैः

न ते स्त्रीष्वभिरज्यन्ते न च तेषां विरागता[1] ।
विभावितै[ते]षां संज्ञा इस्त्रिसंज्ञा स्वभावतः ॥८५॥
अशून्या बुद्धक्षेत्रास्ते येषु शूरा भवन्ति[2] ते ।
किं तेषां मारु[3] पापीयानन्तरायं करिष्यति ॥८६॥
दृष्टीकृतेषु ये स्थित्वा [4]बहु बुद्धा विरागिताः ।
व्यापादेन उपस्तब्धा इच्छा-लोभ-प्रतिस्थिताः[5] ॥८७॥
[6]सर्वसंज्ञा विभावित्वा[7] संज्ञावैवर्तिये स्थिताः ।
य एवं ज्ञास्यते[8] ज्ञानं[9] बुद्धज्ञानमचिन्तियम् ॥८८॥
पूर्वान्तमपरान्तं च[10] प्रत्युत्पन्नं च पश्यति ।
एवं च देशिता धर्मा[11] न चात्र[12] किंचि देशितम् ॥८९॥
न च ज्ञानेन जानाति [13]न चाज्ञानेन सीदति ।
ज्ञानाज्ञाने[14] विकल्पेत्वा बुद्धज्ञानेति[15] वुच्चति ॥९०॥
विज्ञप्ति-वाक्यसंकेतं बोधिसत्त्वः प्रजानति ।
करोति अर्थं[16] सत्त्वानामप्रमेयमचिन्तियम् ॥९१॥

1 A विरागिता ; Tib. 172a, l. 1 : དེ་དག་ཡིད་བྱུང་མི་བྱེད་ལ །
2 A सूत्रा वसन्ति ; B सूरा वसन्ति 3 A मारः
4 C दृष्टीकृता ये स्थिता ये तैध ; Tib. 172a, l. 3. སངས་རྒྱས་མང་པོ་མཉེས་མ་བྱས །
5 B लोभप्रतिष्ठिताः
6 A & B add :—त एव मार विज्ञेय सर्वे दृष्टिप्रतिस्थिताः ।
न तेषां मारः पापीयानन्तरायं प्रयुज्यते ॥
7 B °वत्वा ; C °वेत्वा 8 A ज्ञास्यति ; B ज्ञास्यती
9 B ज्ञाना 10 A पूर्वान्तश्च परान्तश्च ; B °न्तामपरान्तश्च
11 B °श्च शितो धर्मो 12 A & B चात्रो
13 A जानन्ति नो वा ; B जानन्ति न चा° 14 B ज्ञानाज्ञानं
15 A ज्ञानाज्ञानं विकल्पित्वा बुद्धज्ञानेन्ति ; B बुद्धज्ञानन्ति
16 A सोर्थं ; B स्वार्थं

संज्ञा संजाननार्थेन उद्ग्रहेण निदर्शिता[1] ।
अनुद्ग्रहश्च सा संज्ञा विविक्तार्थेन देशिता[2] ॥९२॥
यञ्चो विविक्त'[3] सा संज्ञा या विविक्ता स देशना ।
संज्ञास्वभावो ज्ञातश्च[4] एवं संज्ञा न[5] भेष्यति ॥ ९३॥
प्रहास्याम[6] इमां संज्ञां यस्य संज्ञा प्रवर्तते ।
संज्ञा प्रपञ्चे चरति न [स] संज्ञात्तु मुच्यते ॥९४॥
कस्येयं[7] संज्ञा उतपन्ना केन संज्ञा उत्पादिता ।
केन [सा] स्पर्शिता[8] संज्ञा केन संज्ञा निरोधिता ॥९५॥
धर्मो न लब्धो[9] बुद्धे[न] यस्य संज्ञा उत्पद्यते ।
इह चिन्तेथ तं[10] अर्थं ततः संज्ञा न भेष्यति ॥९६॥

1 B उद्ग्रहणामिदसिता 2 C दर्शिता

3 A यं वा विविक्तं ; B & C यं चो विविक्तां ; Tib. 172b, ll. 1-2:

དབེན་པ་གང་ཡིན་འདུ་ཤེས་དེ། འདུ་ཤེས་ གང་ཡིན་བསྟན་པ་དེ།
འདུ་ཤེས་རང་བཞིན་ཤེ་ཤེས་དེ། དེ་ལྟར་འདུ་ཤེས་མེད་པརའགྱུར།

4 B ज्ञानश्च 5 A & C च

6 A प्रभास्यामि ; B प्रहास्यामि ; Tib. 172b, ll. 2-3:

འདུ་ཤེས་འདི་ནི་སྤང་སྙམ་དུ། གང་གི་དུ་ཤེས་འབྱུང་བ་ནི།
འདུ་ཤེས་སྤྲོས་ལ་སྤྱོད་པ་སྟེ། འདུ་ཤེས་ལས་ནི་དེ་མི་འཐར།

7 C यस्येयं 8 B केन स्पर्शिता

9 B लब्ध ; Tib. 172b, ll. 4-5:

གང་གི་འདུ་ཤེས་འབྱུང་བ་ནི། སངས་རྒྱས་ཀྱིས་ཀྱང་ཆོས་མ་བརྙེས།
འདིར་དོན་དེ་བསམ་པར་གྱིས། དེ་ནས་འདུ་ཤེས་མེད་པར་འགྱུར།

10 B चिन्तेथ तं ; C चिन्तेत त

कदा [1]संज्ञा उत्पन्ना[2] कस्य संज्ञा विरुध्यत ।
विमोक्ष चित्तचारस्य कथं तत्र उत्पद्यते[3] ॥९७॥
यदा विमोक्षं स्पृशति सर्वचिन्ता अचिन्तिया[4] ।
अचिन्तिया यदा चिन्ता तदा भोति अचिन्तियः[5] ॥९८॥
चिन्ताभूमौ स्थिहित्वान पूर्वमेव विचिन्तिता[6] ।
सर्वचिन्तां जहित्वान ततो भेष्यत्यचिन्तियः[7] ॥९९॥
शुक्लधर्मविपाकोऽय[म]संस्कारेण पश्यति ।
एकक्षणेन जानाति सर्वसत्त्वविचिन्तितम् ॥१००॥
यथा सत्त्वास्तथा चिन्ता यथा चिन्ता तथा जिनाः ।
अचिन्तियेन बुद्धेन इयं चिन्ता प्रकाशिता[8] ॥१०१॥
यो रहो एकु चिन्तेति कदा चिन्ता न भेष्यति ।
न चिन्तां चिन्तय[ं स्त]स्य सर्वं चिन्ता वि[ग]च्छति[9] ॥१०२॥

1 B यद ; A & C कदा संज्ञा अनुत्पन्ना

2 A न उत्पन्ना ; Tib. 172b, ll. 5-6:

ནམ་ཆོ་འདུ་ཤེས་སྐྱེས་པ་ན། སུ་ཡི་འདུ་ཤེས་ཡིན་ཞེས་བརྗོད།
སེམས་ཀྱི་རྒྱུད་ཀྱི་རྣམ་ཐར་ཡང་། དེ་ལ་ཇི་ལྟར་རྟུང་བར་འགྱུར།

3 A & B विमोक्षश्चित्त धारस्य कथं तत्रोपलभ्यते

4 B अचिन्तियां

5 A अचिन्तिया ; B भोन्ति अचिन्तियः

6 A पूर्वमेव विचिन्तिया

7 B भेष्यमचिन्तियः ; C भेष्यामचि०

8 Tib. 173a, l. 1-2:

སེམས་ཅན་ཅི་འདྲ་བཞིན་བསམ། བསམ་བཞིན་རྒྱལ་བ་དེ་དྲ་སྟེ།
སངས་རྒྱས་བསམ་དུ་མེད་པ་ཡིས། བསམ་པ་འདི་ནི་རབ་ཏུ་བསྟན།

9 A drops this line.

च्युते मृते कालगते यस्य चिन्ता प्रवर्तते ।
चिन्तानुसारि विज्ञानं नासौ चिन्तान्त[1]मुच्यते ॥१०३॥
ये स्थिता इस्त्रिसंज्ञायां रागस्तेषां प्रवर्तते ।
विभावितायां संज्ञायां न रागेणोपलिप्यते[2] ॥१०४॥
इयं चिन्ता महाचिन्ता धर्मचिन्ता निरुत्तरा ।
अनया धर्मचिन्ताय भूतचिन्ता प्रवर्तते ॥१०५॥
बहु अचिन्तिया चिन्ता दीर्घरात्रं विचिन्तिता[3] ।
न च चिन्ताक्षयो जात[4]श्चिन्तयित्वा अयोनिशः ॥१०६॥
योऽसौ चिन्तयते नाम क्षये ज्ञानं न[5] विद्यते ।
न क्षयो भूमिज्ञानस्य[5] क्षयस्यो एष धर्मता ॥१०७॥
घोषो वाक्पथ[7]विज्ञप्तिः क्षयशब्देन देशिता[8] ।
निर्विशेषाश्च ते धर्मा यथाज्ञानं[9] तथा क्षयः ॥१०८॥

1 A & C चिन्तान्त ; B चिन्तानुमुच्यते 2 A drops this line.

3 B चिन्ता दीर्घरात्र विचिन्तिताः

4 A & C ज्ञातः ; Tib. 173a, ll. 5-6:

ཚུལ་མ་ཡིན་པ་རྣམ་བསམས་པ། བསམ་པ་བསམ་ལས་མང་པོ་དག །
ཡུན་རིང་དུས་སུ་རྣམ་བསམས་ཀྱང་། བསམ་པ་དག་ནི་ཟད་མ་གྱུར། །

5 B ॰ज्ञानन्नन संविद्यते

6 Tib. 173a, ll. 6-7:

གང་དག་མིང་ལ་སེམས་པ་ཡང་། ཟད་པ་ལ་ནི་ཡེ་ཤེས་མེད། །
སྣ་ཤེས་པ་ལ་ཟད་པ་མེད། ཟད་པའི་ཆོས་ཉིད་དེ་ཡིན་ནོ། །

7 A वाक्यथ ; B वाकथ॰ 8 A देशितः

9 B ॰ज्ञान

अनुत्पन्ना निरुद्धाश्च[1] अनिमित्ता अ[ल]क्षणाः ।
कल्पकोटिं पि[2] भाषित्वा अनिमित्तेन देशिताः ॥१०९॥
सर्वभावान् विभावित्वा अभावे ये प्रतिष्ठिता[3] ।
न चान्यो दर्शितो भावो [नाभावोऽ]न्यो निदर्शितः[4] ॥११०॥
विज्ञप्ता भावशब्देन अभावस्य प्रकाशना ।
न चासौ[5] सर्वबुद्धेहि अभावः शक्यु पश्यितुम्[6] ॥१११॥
यो भावः सर्वभावानामभाव एष दर्शितः ।
एवं भावान् विजानित्वा अभावो भोतिदर्शितः ॥११२॥
नासौ[7] स्पर्शयितुं शक्यमभावो जातु केनचित् ।
स्पर्शनात्तु अभावस्य निर्वृति[8] एष देशिता ॥११३॥
अहं बुद्धो भवेल्लोके यस्यैषा हि मति[र्भवेत्] ।
न जातु भवतृष्णार्तो[9] बोधिं बुध्येत पण्डितः ॥११४॥
न कंचि धर्मं[10] प्रार्थेति बोधिसत्त्वः समाहितः ।
निष्किंचना निराभोगा[11] एषा बोधीति उच्यते[12] ॥११५॥

1 C अनुत्पाद नि०
2 A कल्पकोट्यपि ; B वि०
3 A प्रतिस्थिताः
4 B नाभावोन्येन द०
5 B न चास्यै
6 B सस्कृप० ; C पश्यतुम्
7 A न चासौ स्पर्शयितुं शक्यः अभावो जातु ; B न चासौ···जाम
8 A निवृती ; B संवृती ; Tib. 173b, ll. 4-5:

དངོས་པོ་མེད་པ་དེ་ཡང་ནི། སུས་ཀྱང་ནམ་དུ་རེག་མི་ནུས།
དངོས་པོ་མེད་པ་རེག་པ་ཡིས། ཀུན་རྫོབ་དུ་ནི་དེ་བསྟན་དོ།

9 B तृष्णायौ
10 A किंचिद्धर्मं ; B किञ्चिद्धर्मं
11 A निःकिंचन निरालम्बा
12 A वुचति ; B बुद्धेति ; C बोधीत उ०

बहू एवं प्रवक्ष्यन्ति वयं बोधाय प्रस्थिताः ।
इमां गतिमजानन्तो दूरे ते बुद्धबोधये ॥११६॥
शब्देन देशिता धर्माः सर्वे[1] संस्कारशून्यकाः[2] ।
यश्च स्वभावः शब्दस्य[3] गम्भीरः सूक्ष्म दुर्दृशः ॥११७॥
महाभिज्ञाय निर्देश इदं सूत्रं प्रवुच्चति ।
अर्थाय बोधिसत्त्वानां सर्वबुद्धेहि देशितम्[4] ॥११८॥
प्रतिपक्षा हतास्तेषां[5] यावन्तः सांक्लेशिकाः ।
प्रतिष्ठिता अभिज्ञासु ऋद्धिस्तेषां सुभाविता[6] ॥११९॥
स्थिताः प्रणिधिज्ञानस्मिंस्तच्च[7] ज्ञानं विभावितम् ।
अतृप्तिर्लब्धज्ञानस्य अप्रमेया अचिन्तियाः[8] ॥१२०॥
न तेषामभिसंस्कारः समाधी रिद्धिकारणम्[9] ।
विपाक एष शूराणां नित्यकालं समाहि[त]ः[10] ॥१२१॥
विपाकजाये ऋद्धीये गच्छन्ती[11] क्षेत्रकोटयः[12] ।
पश्यन्ति लोकप्रद्योतान् यथा गङ्गाय वालिका[13] ॥१२२॥

1 A सर्व 2 A & C शून्यताः
3 A शून्यस्य ; C स्वभावाः शब्दस्य
4 A & B देशितः 5 C हतास्तस्य
6 B अप्रतिष्ठिता अविज्ञासु ऋद्धिस्तेषां सुभाषिता ।
7 A & C प्रणिधिज्ञानस्मिं स्तच्च न 8 B अतृप्ति लब्धज्ञानस्य अप्रमेय अचिन्तिया
9 A & B समाधि रिद्धिकारणात 10 B °हिताः
11 B विपाकजायये ऋद्धिसिद्धि सिद्धिये क्षेत्रकोटियः, Tib. 174a, ll. 5-6:
རྣམ་སྨིན་སྐྱེས་པའི་རྫུ་འཕྲུལ་གྱིས། ཞིང་ནི་བྱེ་བར་དེ་འགྲོ་སྟེ།
འཇིག་རྟེན་སྒྲོན་མ་མཐོང་བ་ནི། གངྒཱ་དག་གི་བྱེ་མ་སྙེད།
12 A गच्छन्ति 13 A °वालुकाः

उपपत्तिश्च्युतिस्तेषां यथा चित्तस्य वर्तते ।
चित्तस्य वशितां प्राप्ताः[1] कायस्तेषां प्रभास्वरः ॥१२३॥
भावनामयि[2] ऋद्धीये ये स्थिता बुद्धश्रावकाः ।
तेभिः संस्कार-ऋद्धीये[3] कलां नायान्ति[4] षोड़शीम् ॥१२४॥
न तेषां सर्वदेवेभिराशयः शक्यु[5] जानितुम् ।
अन्यत्र लोकनाथेभ्यो ये वा तेषां समे स्थिताः ॥१२५॥
न तेषामस्ति खालित्यं[6] न चैव पलितं शिरे ।
औदारिका जरा नास्ति न दुःखमरणं तथा ॥१२६॥
संशयो विमतिर्नास्ति कांक्षा तेषां न विद्यते ।
रात्रिन्दिवं गवेषन्ति सूत्रकोटीशतानि ते ॥१२७॥
प्रहीणानुशयास्तेषां यावन्तः सांकिलेशिकाः ।
समचित्ताः सदा भोन्ति सर्वसत्त्वान तेऽन्तिके[7] ॥१२८॥
समाधिकोटिनियुतां निर्दिश[न्ति दश]द्दिशे ।
प्रश्नकोटीसहस्राणि व्याकुर्वन् [ह्य]नवस्थिताः ॥१२९॥
स्त्रीसंज्ञा पुरुषसंज्ञा च[8] सर्वसंज्ञा विभा[वि]ताः ।
स्थिता अभावसंज्ञायां देशेन्ति भूतनिश्चयम्[9] ॥१३०॥
परिशुद्धेन ज्ञानेन यथावद्धर्मदेशकाः ।
धर्मसंगीत्यभियुक्ताः समाधिज्ञानगोचराः ॥१३१॥

1 B वसिता प्राप्ताः
2 A मय
3 B तेति संस्कार-ऋद्धीये ; C रिद्धिये
4 A & C नायाति
5 A देवेहिराशयः शक्यु
6 A स्खालित्यं ; C खालित्यं ; Tib. 174b. l. 5: སྤྱི་ཚེར=སྤྱི་ཙེར । =baldness=खल्वात ।
7 B तेन्तिके ;
8 A drops च ; B repeats सर्वसंज्ञा
9 B ०न्तो भूतनिश्चयेत्

यापि ध्यानचरिस्तेषां नासौ भावप्रतिष्ठिता[1] ।
अबन्ध्यं वचनं तेषामबन्ध्या धर्मदेशना ॥१३२॥
सुलब्धं तेन मानुष्यं[2] प्रहीणाः सर्वि अक्षणाः[3] ।
कृतज्ञाः सर्वबुद्धानां येषां सूत्रमिदं प्रियम् ॥१३३॥
कल्पा अचिन्तियास्तेहि ये संसारात्तु छोरिताः[4] ।
यैरितः सूत्रश्रेष्ठातो[5] धृता गाथा चतुष्पदा ॥१३४॥
दृष्टास्ते सर्वबुद्धेहि तैस्ते बुद्धाश्च सत्कृताः ।
क्षिप्रं च बोधिं प्राप्स्यन्ति[6] तेषां[7] सूत्रमिदं प्रियम् ॥१३५॥
न तेषां कांक्ष विमती[8] सर्वधर्मेषु भेष्यती[9] ।
आसन्ना निर्वृतिस्तेषां येषां[10] सूत्रमिदं प्रियम् ॥१३६॥
दृष्टस्तेहि[11] महावीरो गृध्रकूटे तथागतः ।
सर्वे व्याकृतु बुद्धेन द्रक्ष्यन्ति[12] मैत्रकं जिनम् ॥१३७॥

1 A ०चरी तेषां न सा भाव प्रतिस्थिता ; B ०चरीस्तेषान्न सार्वभावप्रतिछिताः ; Tib. 174b, ll. 6-7:
དེ་ཡི་དེང་འཛིན་སྤྱོད་པ་ཡང་། དངོས་པོ་དག་ལ་མི་གནས་དེ། །
དེའི་ཚིག་ཀྱང་དོན་མེད་མིན། ཆོས་བསྟན་པ་ཡང་འབྲས་བུ་ཡོད། །

2 A सुलभं तेभिर्मानुष्यं ; B सुलब्ध तेहि मा० ; C अलब्ध'

3 A सर्व अक्षणाः ; C सन्नि लक्षणाः

4 B ०हि येषां सारात्तुच्छो०

5 A & B सूत्ररत्नातो

6 A लप्स्यन्ति

7 B येषां

8 A & B विमतिः कांक्षा

9 A & B भेष्यति

10 B drops येषां

11 B दृष्टा०

12 A द्रक्ष्यन्ते ; B बुद्धैन द्रक्ष्यते

[दृष्ट्वा] मैत्रेय-संबुद्ध[1] लप्स्यन्ते क्षान्तिभद्रिकाम् ।
ये [2]केचि क्षयकालस्मिन्निह सूत्रे प्रतिष्ठिताः ॥१३८॥
स्थितास्ते भूतकोटीये भूतकोटिरचिन्तिया[3] ।
अचिन्तियायां[4] कोटीये कांक्षा तेषां न विद्यते ॥१३९॥
न तेषां विद्यते कांक्षा[5] अणुमात्रापि[6] सर्वशः ।
अणुमात्रे प्रहीणेऽस्मिन् बोधिस्तेषां न दुर्लभा ॥१४०॥
चरतां दुष्करं चैव क्षयकाले सुभैरवे ।
शिक्षित्व सूत्ररत्नेऽस्मिन् प्रतिभानस्मि[7] अक्षयम् ॥१४१॥
इदं सूत्रं प्रवर्तित्वा[8] बुद्धानां[9] गञ्जरक्षकाः[10] ।
सर्वबुद्धानियं पूजा धर्मपूजा अचिन्तिया ॥१४२॥
न तेषां दुर्लभं ज्ञानं बुद्धज्ञानमचिन्तियम्[11] ।
धारयिष्यन्तिदं[12]सूत्रं क्षयकालेऽस्मि दारुणे ॥१४३॥

1 B & C मैत्रेयं दृष्ट सं०

2 A कचित् च्च० ; B केचिन्

3 B भूतकोटचि०

4 A अचिन्तियां ; Tib. 175a ll. 5-6:

དེ་དག་ཡང་དག་མཐའ་ལ་གནས། ཡང་དག་མཐའ་ནི་བསམ་མི་ཁྱབ།
བསམ་གྱིས་མི་ཁྱབ་མཐའ་ལ་ནི། དེ་དག་ནེམ་ནུར་ཡོད་མ་ཡིན།

5 A तेषां कांक्षा विद्यते

6 A ०मात्रेपि

7 A प्रतिभानंसि ; B ०रत्नस्मिन् प्रतिभानंसि

8 C प्रियंकृत्वा

9 A गजरक्षितः ; B गञ्जरक्षितः

10 C adds ततः पूजित संबुद्धा भविष्यन्ति सश्रावकाः ।
इदं सूत्रं प्रवर्त्तन् वा बुद्धानां गजरक्षित ॥

11 B drops this line.

12 B धारयिष्यन्ति इदं ; C ०मं

येभिश्च [1]पूर्वबुद्धानामिमे[2] सूत्रान्त धारिताः ।
तेषां कायगता एते क्षयकाले प्रवर्तिषु[3] ॥१४४॥
ते ते नादं नदिष्यन्ति बुद्धानां क्षेत्रकोटिषु ।
संमुखं लोकनाथानां शाक्यसिंहस्य या चरी[4] ॥१४५॥
सिंहनादं नदन्तस्ते बुद्धनादमचिन्तियम्[5] ।
अनन्तप्रतिभानेन वक्ष्यन्ते बोधिमुत्तमाम् ॥१४६॥
ते ते व्याकृत बुद्धेन इक्ष्वाकुकुलसम्भवाः ।
ये रक्षिष्यन्तिमां[6] बोधिं क्षयकाले महाभये ॥१४७॥
ते ते रूपेण सम्पन्ना लक्षणेहि विचित्रिताः ।
विकुर्वमाणा यास्यन्ति बुद्धकोटीय वन्दकाः[7] ॥१४८॥
मायोपमेहि[8] पुष्पेहि हेमवर्णनिदर्शनैः ।
रूप्यामयेहि पुष्पेहि वैदूर्यस्फटिकेहि च[9] ॥१४९॥
सर्वाणि रत्नजातानि प्रादुर्भोन्त्येषु पाणिषु[10] ।
यैराकिरन्ति संबुद्धान् बोधिमार्गगवेषकाः ॥१५०॥

1 A पूर्वबुये ; B & C सर्व     2 B ०मेव

3 A प्रवर्त्तते ; Tib. 175b, ll. 2-3:

གང་གིས་སྔོན་གྱིས་སངས་རྒྱས་ལས། མདོ་སྡེ་འདི་དག་བཟུང་བ་ནི།
དེ་དག་ལུས་ལ་འཆང་གྱུར་ཏེ། ཟད་པའི་དུས་ལ་རབ་ཏུ་འདོན།

4 Tib. 175b, l. 3: ཤཱཀྱ་སེང་གེའི་སྤྱོད་པ་རྣམས།

5 A & B बुद्धानां पुरतः सदा     6 A & B रक्षन्ति इमां

7 C बुद्धबोधीय ; B बुद्धकोटीयन्दकाः     8 A & B मायामयेहि

9 B ०स्फटिकेचि

10 प्राणिषु ; C प्रादुर्भोन्ति ; Tib. 175b, l. 7:

རིན་ཆེན་རིག་རྣམས་ཐམས་ཅད་ཀྱང་།
དེའི་ལག་ནས་འབྱུང་བར་འགྱུར།

चित्वा नानाविधा पूजा वाद्यनिर्हारसम्पदा[1] ।
निश्चरी रोमकूपेभ्यो यथा गङ्गाय वालिकाः[2] ॥१५१॥
ये च[3] शृण्वन्ति तं शब्दं सत्त्वकोट्यो अचिन्तियाः ।
भवन्त्यविनिवर्त्यास्ते[4] बुद्धज्ञाने अनुत्तरे ॥१५२॥
तेषां[5] च बुद्धकोटीनां वर्णं[6] भाषन्त्यचिन्तियम्[7] ।
अचिन्तियेषु क्षेत्रेषु तेषां शब्दः श्रुणीयति ॥१५३॥
ये च शृण्वन्ति [तं] शब्दं तेषां संज्ञा निरुध्यते ।
निरोधितायां संज्ञायां बुद्धान् पश्यन्त्यनल्पकान्[8] ॥१५४॥
एतादृशेन ज्ञानेन चरित्वा बोधिचारिकाम् ।
कृत्वार्थं [सर्व]सत्त्वानां भवन्त्यर्थकरा जिनाः ॥१५५॥
गुणानुशंसा इत्येते या लभन्ते ह[9] पण्डिताः ।
अन्ये अपरिमाणाश्च यैरियं बोधि धारिता[10] ॥१५६॥
मातृग्रामोऽपिदं[11] सूत्रं श्रुत्वा गाथापि[12]धारयेत् ।
विवर्तयित्वा[13]स्त्रीभावं स भवेद् धर्मभाणकः ॥१५७॥
न सा पुनोपि[14] स्त्री[भाव]मितः पश्चाद् ग्रहीष्यति ।
भवेत् प्रासादिको नित्यं लक्षणैः समलङ्कृतः ॥१५८॥

1 A & B ०सम्पदः
2 Aवालुकाः
3 A drops च
4 C भविष्यन्ति वितिवर्त्त्या ते
5 A & B तासां
6 B ०कोटीवर्ण
7 B यां
8 A ०न्त्यनन्तकान् ; B बुद्धा पश्यन्त्यनन्तकं
9 A यां लभन्तीह ; B इत्येतेषां लभन्ति इह
10 A समाधिर्येहि धारितः ; B समाधि ये हि धारिताः
11 A ०ग्रामोप्यदः
12 C योगाथ
13 A निवर्जयित्वा ; B विवर्जयित्वा
14 B न साधुनोपि

श्रेष्ठेय[1] इह सूत्रस्मिन् गुणाः श्रेष्ठाः प्रकाशिताः ।
तेऽस्य[2] सर्वे भविष्यन्ति क्षिप्रं बोधिं च प्राप्स्यते[3] ॥१५९॥
विशारदश्च सो नित्यं भोति सर्वासु जातिषु[4] ।
धारयित्वा इदं सूत्रं बोधिसत्त्वान[5] गोचरम् ॥१६०॥
जनको बोधिसत्त्वानां समाधिः शान्त भाषितः[6] ।
य इच्छेद् बुद्धितु[7] बोधिमिदं सूत्रं प्रवर्तयेत् ॥१६१॥
आसन्नास्ते मुनीन्द्राणामासन्ना[8] बुद्धबोधये ।
लप्स्यन्ति न चिरेणेमां[9] भूमिं शान्तां समाहिताः[10] ॥१६२
इह बोधीय ते[11] शूरा बोधिसत्त्वाः स्थिताः सदा ।
पश्यन्ति बुद्धकोटीयो यथा गङ्गाय वालिकाः[12] ॥१६३॥
राजा भवित्वा महीपति[13] चक्रवर्ती
दृष्ट्वा च बुद्धान् विरजान्[14] सुशान्तचित्तान् ।
गाथाशतैस्तां स्तविष्यति[15] लोकनाथान्
स लभित्व शान्तं[16] इमु विरजं समाधिम् ॥१६४

1 B श्रेष्ठयं ; Tib. 176b. l. 1 :
མདོ་སྡེ་མཆོག་རབ་འདི་ཡི་ནི །
ཡོན་ཏན་དག་ཀྱང་མཆོག་བཤད་པ །
2 B तस्य ; C ते तस्य 3 A & B प्राप्स्यति
4 B जाति सः 5 A सर्वबुद्धान 6 A शान्तु विभावितः
7 B बुद्धितु ; C बुध्यतु 8 B आसन्ना मुनिन्द्राणां
9 C लप्स्यन्त्य न चिरे० 10 B & C शान्ता समाहिता
11 B बोधाते 12 A वालुकाः
13 A महीपतिश्चक्र० 14 B ०द्धानान्विरज-सु
15 B स्तां स्तभविष्य० 16 C भूमिं

सो पूज कृत्व[1] अतुलिय नायकानां
सुमहायशानां [2]देवनरोत्तमानाम् ।
मुक्त्वा स राज्यं[3] यथरिव खेटपिण्डं
शुद्धो विशुद्धश्चरिष्यति ब्रह्मचर्यम् ॥१६५॥

स प्रव्रजित्व जिनवर शासनस्मि[4]-
ल्लब्ध्वापि चैतं विरजु[5] समाधि शान्तम् ।
कल्याणवाक्यो मधुरगिरः स भूत्वा
अधिष्ठानु धीमान् भविष्यति सूत्रकोट्याः[6] ॥१६६॥

शून्यानिमित्तं परम प्रणीतु[7]शान्तं
धर्मं प्रशान्तं चर निपुणं असंगम्[8] ।
[स्वभावशून्यं] सद विरजं प्रशान्तं
समाधिप्राप्त्या बहु जनि[9] संप्रकाशयी ॥१६७॥

गंभीरबुद्धी सततमनन्तबुद्धी
विस्तीर्णबुद्धी अपरिमितार्थबुद्धी[10] ।

1 A कृत्वा ; B पूर्वं कृत्वा

2 C देउ०

3 B राज्जं

4 A & B ०त्वा मुनिवर शासनस्मि०

5 A श्चैनं विरजं ; B चैवं विरज

6 B ०कोट्यः

7 A & B प्रणीत

8 A धर्मं प्रशान्त चरि निपुणो असंगः ; B सान्तत्यधर्मं प्रसान्तं चरिणिपुणयो असंगः

9 A जनं ; B ०जन ; Tib. 177a, ll. 1-2:
སྟོང་པ་མཚན་མེད་མཆོག་ཏ་གྱུ་ནོམ་ཞི་བའི་མཆོག །
རབ་ཏུ་ཞི་ཆོས་སྤྱད་པ་ཞེ་བཅིང་ཐོགས་པ་མེད། །

10 C ०बद्धीः

गम्भीरशान्तं लभिय इमं समाधि-
    मालोकप्राप्तो भविष्यति सर्वलोके ॥१६८॥

शुचिश्च नित्यं भविष्यति ब्रह्मचारी
    स [1]निरामगन्धः सततमसंकिलिष्टः ।

अन्यांश्च तत्र स्थपिष्यति सत्त्वकोट्यो
    लब्ध्वा प्रशान्तं इमु विरजं समाधिम् ॥१६९॥

स [2]सुतीक्ष्णप्रज्ञो भविष्यति श्रेष्ठप्रज्ञः[3]
    श्रुतिसागरोऽसौ[4] नित्यमनन्तबुद्धिः[5] ।

कल्याणवाक्यो मतिकुशलो विधिज्ञो
    धारित्व शान्तिं इमु[6] विरजं समाधिम्[7] ॥१७०॥

ये कर्मस्थाना तथरिव शिल्पस्थाना
    भैषज्यस्थानस्तथरिव औषधीनाम् ।

सर्व[त्र] धीरो भविष्यति पारप्राप्तो
    धारित्व सूत्रं इमु[8] विरजं समाधिम्[9] ॥१७१॥

काव्येषु शास्त्रे[षु][10] तथपि च हास्यलास्ये
    नृत्येऽथ गीते सुकुशल पारप्राप्तः[10] ।

1 A & B drop स

2 B स सती॰

3 A ॰द्दण प्रविष्यति श्रेष्ठः प्राज्ञः ; C प्रज्ञ

4 C श्रुति सागरान्तो

5 B ॰बुद्धी ; C ॰वुद्धीः ; Tib. 177a, l. 6 :
དེ་གྲོས་རྒྱ་མཚོར་འགྱུར་ཞིང་རྟག་ཏུ་བློ་མཐའ་ཡས །

6 A धारयित्व शान्तं इमु ; B वारयित्व सान्तामि॰

7 B विरज समा॰

8 A शान्तं इमु ; B सान्तमोमु

9 B विरजसमाधिम्

10 A & B नृत्येषु शोतेषु कुशलपार॰ ; C ॰प्रासा

आचार्यु लोके भविष्यति नित्यकालं
धारित्व शान्तं इमु विरजं समाधिम्[1] ॥१७२॥
परिवारवान्[2] सो भविष्यति नित्यकालं
स अभेद्यपक्षः सद सहितः[3] समग्रः ।
चरमाणु श्रेष्ठां[4] वरां शिव बोधिचर्यां
धारित्व[5] सूत्रं इमु विरजं समाधिम् ॥१७३॥
शोकाथ शल्या तथरिव चित्तपीडा
नो तस्य जातु भविष्यति पण्डितस्य ।
आरोग्यप्राप्तो भविष्यति सर्वकालं
धारित्व शान्तं इमु विरजं समाधिम्[6] ॥१७४॥
ये कायशूलास्तथरिव[7] चित्तशूलाः
ये दन्तशूलास्तथपि च शीर्षशूलाः ।
नो तस्य भोन्ती व्याधयु[8] जीवलोके
धारित्व शान्तं इमु[9] विरजं समाधिम् ॥१७५॥
यावन्त[10]रोगा बहुविध मर्तलोके
ये कायरोगास्तथरिव[11] चित्तरोगाः ।

1 B सान्तमिमु विरजम०
2 B परिवार'
3 C समाह्वितः
4 A श्रेष्ठ' ; B चरमानु षेष्ठमवरांसन्
5 C धारेत्व
6 B विरज समधि'
7 A & B स्तथापि च
8 A भोन्ति व्याधय
9 A शान्त इमु ; B सान्तमिमु
10 B यावन्ति
11 B ०स्तथपि च

ते तस्य रोगाः सततं न जातु भोन्ति[1]

धारित्व शान्तं इमु[2] विरजं समाधिम् ॥१७६॥

चित्तस्य वा ये बहुविधु यत्किलेशाः[3]

काये वापी बहुविध रोग जाताः[4] ।

ते तस्य नास्ती[5] बहुविध संकिलेशा

धारित्व शान्तं इमु विरजं[6] समाधिम्[7] ॥१७७॥

यथन्तरीक्षं[8] गगनमनोपलिप्तं

प्रकृतिविशुद्धं विमलप्रभास्वरं च[9] ।

चित्तं तथैव भवति विशुद्ध तस्यो[10]

धारित्व शान्तं इमु विरजं समाधिम् ॥१७८॥

चन्द्रप्रभो[11] तथपि च[12] सूर्य आभा

शुद्धा अग्राह्या भवति प्रभास्वराश्च[13] ।

चित्तं तथैव भवति प्रभास्वरं च[14]

धारित्व शान्तं इमु विरजं समाधिम् ॥१७९॥

यथ अन्तरीक्षं[15] न सुकरु चित्रणाय

रङ्गान्[16] गृहीत्वा बहुविध नैकरूपान् ।

1 B भोन्ती
2 B सान्तमिमु
3 B पत्किलेसाः ; C चित्तस्य काये
4 A जाती ; B काय वापी बहुविध रोग जाती ; C यस्य वापी
5 A नास्ति
6 B धारित्व सान्त इमु विरज
7 A adds चन्द्रस्य आभा तथरिव सूर्य शाभा शुद्धा अग्राह्या भवति प्रभास्वरा
8 A & C अथ अन्तरीक्षं
9 A drops च
10 A भवति प्रभास्वरं
11 B चद्रस्य आभा तथरिव
12 A & C प्रभास्वरासौ
13 B स
14 A drops च
15 A यथान्तरिक्षं ; B यथान्तरीक्षं
16 B बहून्

चित्तं तथैव न सुकरु चिन्तितु
धारित्व[1] शान्तं इमु विरजं समाधिम् ॥१८०॥
वातो यथैव[2] चतुर्दिश वायमानो
असज्जमानो व्रजति दिशः समन्तात्[3] ।
वातसमा[ना] भवति स चित्तधारा[4]
जगि[5] सा असक्तो व्रजति अनोपलिप्तः ॥१८१॥
जालेन शक्यं गृह्णितु वायमानः[6]
पाशेन चापी[7] बन्धितु शक्य वातः ।
नो तस्य चित्तं सुकरु विजाननाय[8]
भावेत्व[9] शान्तमिमु विरजं समाधिम्[10] ॥१८२॥
प्रति[भा]सु शक्यं जलगत गृह्णनाय[11]
संप्राप्तु तोयं तथपि च तैलपात्रे ।
नो तस्य चित्तं सुकरु विजाननाय[12]
भावेत्व[13] शान्तं इमु विरजं समाधिम् ॥१८३॥

1 A से धारित्व ; B चित्तन्तथैवा न सुकरु चिचित्तुं स भारित्व ; C सेवेत्व
2 A & B यथा चतु०
3 B व्रजति दिससत्त्वात्
4 A & B सि ; C चित्तधीना
5 C जसि
6 A गृहीतु वायमानः
7 A चापि ; B वापी
8 A सुकरु प्रजानानायै ; B नो तस्य चित्त सुकरु प्रजाननायै ; C ०नःया
9 A & B भावित्व
10 B शान्तं इमु चित्त समाधि
11 A जलगृह्यनाये ; B प्रतिभासु शक्यं जालतुगृद्धनाये
12 A प्रजाननाय
13 B धारेषु ; Tib, 178a, ll. 6-7:

གཟུགས་བརྙན་དག་ནི་ཆུ་ཡི་ནང་དུ་གཟུང་བར་རུང །
འབྲུ་མར་གང་བའི་སྣོད་དང་ཆུ་ཡི་ནང་དུ་འབྱུང །

गर्जन्ति मेघा विद्युलता चरन्ता
शक्यं ग्रहीतु पाणिन मानुषेण ।
नो तस्य चित्तं सुकरु प्रमाणु ज्ञातुं[1]
भावेत्व शान्तं इमु विरजं समाधिम् ॥१८४॥

सत्त्वान शक्यं रुतरवितं ग्रहीतुं[2]
ये सन्ति सत्त्वा दशदिशि बुद्धक्षेत्रे ।
चित्तस्य तस्यो न सुकरु ज्ञातु कोटिं
समाधिलब्धो यद् भवि[3] बोधिसत्त्वः ॥१८५॥

सो तां[4] लभित्व विरजं समाधिभूमिं[5]
असंकिलिष्टो भवति अनोपलिप्तः ।
नो तस्य भूयो विभवि निवेश जातु
अनेन लब्धो[6] भवति समाधि शान्तः ॥१८६॥

नो कामलोलो न च पुन रूपलोलो
न[7] इस्त्रिलोलो न च पुन भ्रान्तचित्तः ।
शान्तः प्रशान्तो भवति अनोपलिप्तो
यद् भोति लब्धो अयु[8] विरजः समाधिः ॥१८७॥

न पुत्रलोलो न च पुन धीतलोलो
नो भार्यलोलो[9] न च परिवारलोलः ।

1 A drops stanza 184. B चित्तं सुकरु प्रजान भागे
2 A & C गृ॰ , B रुतरप्र॰
3 C लभि
4 A & B तं
5 A & B ॰धि शान्तं
6 B यदनेनल॰ ; A & C तेन
7 A & C न पि
8 B अप्रविरुद्धे
9 A drops नो भार्यलीलो ; B न भार्यालीलो

सुशान्तचारी[1] भवति अनापलिप्तो
यद्[2] भोति लब्धो अयु विरजः समाधिः ॥१८८॥
न हिरण्यलोलो[3] न च पुनरर्थलोलो
न स्वर्गलोलो[4] धनरतनेष्वसक्तः[5] ।
सुविशुद्धचित्तो भवति स निर्विकल्पः
समाधिप्राप्तो अयु भवती[6] विशेषः ॥१८९॥
न स्वर्गहेतोश्चरति [स] ब्रह्मचर्यं
न स्वर्गलोलो ददति सदा नु विज्ञः ।
संबोधिकामः कुशलचरिं चरन्तः[7]
समाधिप्राप्तो अयु भवती[8] विशेषः ॥१९०॥
नो राज्यहेतोश्चरति तपो व्रतं वा
नैश्वर्यमर्थास्त्रिभुवनि प्रार्थमानः[9] ।
संबोधिलोलो बहुजनहिताय
निष्पादयी[10] सो इमु विरजं[11] समाधिम्[12] ॥१९१॥

1 B & C सुप्रशान्तचारी    2 A यदि ; B यत
3 B adds स्वर्गलोलो    4 B drops here न स्वर्गलीलो ; C स्वर्ग॰
5 A ॰नेष्वसक्तः
6 A भवति ; B अनुभवतीविसेषः ; Tib. 178b, l. 6:
གསེར་ལ་མི་སྲེད་ནོར་རྣམས་ལ་ཡང་སྲེད་མེད་དེ །
མཐོ་རིས་མི་སྲེད་རིན་ཆེན་རྫས་ལ་ཆགས་མི་འགྱུར །
7 A & B संबोधिकामो ददति स बोधिसत्त्वः    8 A भवति
9 A & B प्रार्थयन्तः    10 A ॰दयि    11 B विरज
12 A & B & Tib. 179a add the following stanzas:—
न गीतलोलो न च पुनर्नृत्यलोलो
न संगलोलो न च पुन पानलोलो ।

नो तस्य रागो जनयति[1] जातु पीडां
यो न स्त्रीलोलो सो भवति[2] भ्रान्तचित्तः ।

नान्नलोलो न च पुन वस्त्रलोलो
समाधिप्राप्ते अयु भवति विशेषः ॥

न चक्षुलोलो न च पुन श्रोत्रलोलो
न घ्राणलोलो न च जिह्वलोलः ।
न कायलोलो न च पुन चित्तलोलो
समाधि-प्राप्त अयु भवति विशेषः ॥

न गेहलोलो न च पुनररण्यलोलो
न विहारलोलो न च पुन ग्रामलोलः ।
न राज्यलोलो न च नगरेषु लोलो
समाधि-प्राप्ते अयु भवति विशेषः ॥

न दानलोलो न च पुन शीललोलो
न क्षान्तिलोलो न च वीर्यलोलो ।
न ध्यानलोलो न च प्रज्ञालोलो
समाधि-प्राप्ते अयु भवति विशेषः ॥

न सत्त्वलोलो न च पुन जीवलोलो
न बुद्धलोलो न च पुन धर्मलोलो ।
न संघलोलो न च पुन बोधिलोलो
समाधिप्राप्ते अयु भवति विशेषः ॥

न अस्तिलोलो न च पुनर्नास्तिलोलो
न मध्यलोलो न च पुन अन्तलोलो ।
न सर्वलोलो न च पुन होत्यलोलो
समाधि-प्राप्ते अयु भवति विशेषः ॥

1 A ०गो न जयति

2 A ०लो न स भवति ; B योनि स्त्रीलोलो न स भवि

तथापि तेन प्रकृतिप्रज्ञाय[1] रागो

लभित्व एतं[2] विरजु समाधि शान्तम्[3] ॥१९२॥

नो तस्य दोषो जनयति जातु पीडां

व्यापादु येनो प्रमथितु पण्डितेन[4] ।

मैत्राय तेनो निहत स दोष-धातु[5]

प्रतिलभ्य एतं विरजु[6] समाधि शान्तम्[7] ॥१९३॥

नो तस्य मोहो जनयति जातु पीडां

प्रज्ञाय तेनो निहत स मोह अविद्या[8] ।

तं ज्ञानु लब्धं वितिमिरमप्रमेयं

समाधि-प्राप्ते इमि गुण अप्रमेयाः[9] ॥१९४॥

1 B तेनो प्रकृतिप्रज्ञात्व ; C ०प्रज्ञार्थं  2 A एवं

3 B ०सान्तः ; Tib. 179b, ll. 2-3:

དེ་ལ་འདོད་ཆགས་ནམ་ཡང་གནོད་པ་མི་སྐྱེད་དེ །

སྡུ་དག་བུད་མེད་སྤྱོད་པ་དེ་ནི་སེམས་འཁྲུལ་འགྱུར །

འདི་ལྟར་དེས་ནི་འདོད་ཆགས་རང་བཞིན་ཡོངས་སུ་ཤེས །

རྨལ་དང་བྲལ་བ་ཞི་བའི་ཏིང་ངེ་འཛིན་འདི་ཐོབ་ན །

4 C प्रतिघमथो करेय्यः  5 A मैत्र्याय तेना सुनिहत दोषसर्वे

Tib. 179b, ll. 3-4:

དེ་ལ་ནམ་ཡང་ཞེ་སྡང་གནོད་པ་མི་སྐྱེད་དེ །

མཁས་པས་འདི་ལྟར་གནོད་སེམས་རབ་ཏུ་བཤིག་པའི་ཕྱིར །

བྱམས་པར་བྱེད་ཅིང་ཞེ་སྡང་ཐམས་ཅད་ཤིན་ཏུ་བཅོམ །

6 A एवं विरजः  7 B drops stanza 193.

8 A & B तनाविनिहतमोहविद्या

9 A समाधि लब्धे इमि गुणमप्रमेयाः ; B समाधिलब्धे इति गुणा अप्रमेया

अशुभाय[1] रागः सतत सुनिगृहीतो
मैत्र्याय दोषो निहतु सदा अशेषः ।
प्रज्ञाय मोहो विधमिय क्लेशजालं
समाधि-प्राप्तः प्रतपति[2] सर्वलोके ॥१९५॥

नो तस्य मिद्धं जनयति जातु पीडां
सुभाविता से विविध उत्क्लिेशाः[3] ।
अनोपलिप्तो[4] भवति च विप्रमुक्तः[5]
समाधि-प्राप्ते इमि गुण अप्रमेयाः ॥१९६॥

नो तस्य मोहो[6] जनयति जातु पीडां
तथाहि त्यागे अभिरतु नित्यकालम् ।
सर्वस्वत्यागी[7] भवति सुखस्य दाता[8]
य इमं समाधिं धारयति बोधिसत्त्वः ॥१९७॥

स्थामेनुपेतो[9] भवति अनोपमेयो
स बलेनुपेतो भवति नित्यकालम् ।
नो[10] तस्य लोके भवति समः कदाचिद्[11]
य इमं समाधिं धारयति बोधिसत्त्वः ॥१९८॥

1 B अशुभा
2 C प्रतपतु
3 A पत्क्लिेशाः ; B उपत्तिनिलेसाः
4 B अनापलिप्तो ; C अनुपलिप्त
5 A विप्रयुक्तः
6 A & B लोभो
7 B सर्वसौ०
8 A सुखदाता
9 A & B स्थानेनुपेतो
10 B & C न
11 A & B समोन्य कश्चिद्

यदापि राजा स भवति चक्रवर्ती
मनुजानु लोके उपगत[1] जम्बुद्वीपे ।
तदापि[2] भोती बहुजनपूजनीयो
विशेषप्राप्तो मतिम विशिष्टप्रज्ञः[3] ॥१९९॥

ये भोन्ति मुख्याः[4] कुलरतना[5] विशिष्टाः
सुप्रभू[त]भोगा बहुजनस्वापतेयाः ।
यत्राश्वहस्ती रथवर युग्ययाना
हिरण्यस्वर्णं मणिरतनं[6] प्रभूतम् ॥२००॥

ये श्राद्ध भोन्ती इह वरबुद्धज्ञाने
ते जम्बुद्वीपे कुलरतनाभियुक्ताः[7] ।
तत्रोपपन्नः कुलरतने[8] विशिष्टे
करोति सोऽर्थं[9] सुविपुलज्ञातिसंघे ॥२०१॥

अश्राद्ध ये वा[10] इह कुल जम्बुद्वीपे
श्रद्धां स तेषां जनयति[11] अप्रमत्तः ।
यं बोधिचित्ते प्रतिष्ठति सत्त्वकाये[12]
ते बुद्ध भोन्ती जिनप्रवरः[13] स्वयंभूः ॥२०२॥

1 A उपगन्तु ; B अनुलोके उपरास्त
2 A & B सदापि
3 A वितिमिर श्रेष्ठ
4 B मुष्या
5 A रशयान्तु लयरतना
6 A मतिपतनं ; B ०रय सुवर्णभणिर०
7 B ०नातिबुद्धाः ; Tib. 180a, l. 6-7: རིན་ཆེན་རིགས་ཞེས་བྱ་བ་ཡིན །
8 A कुलधर्म०
9 B स्वर्थं
10 B चो
11 B जनय
12 A प्रतिष्ठति सत्त्वकायं ; B प्रतिष्ठपि सत्त्वकायं ; C प्रतिष्ठिमि सत्त्वकाले
13 A भोन्ति जिनप्रवराः ; B सततन्तु

ते च स्पृशित्व अतुलियमग्रबोधिं
चक्रं प्रवर्तेत्यसदृश बुद्धक्षेत्रे[1] ।
ये चो विजानी इमु तद[2] धर्मचक्रं
अनुत्पत्तिधर्मे निखिल ते संप्रतिष्ठो[3] ॥२०३॥
सुबहुकराश्चो अमि तद बोधिसत्त्वाः
सत्त्वान भोन्ति सततु ते[4] पूजनीयाः ।
करोन्ति तेऽर्थं अतुलिय नित्यकालं
सत्त्वा[न] चक्षुर्वितिमिरु ते जनेन्ति[5] ॥२०४॥
बहव[6] शतसहस्राः सत्त्वकोटी अनन्ता[7]
येष कुशलमूला भोन्ति तत्र[8] श्रुणित्वा ।

1 B प्रवन्त्योन्त्य सहस्रबुद्धक्षेत्रे ; C प्रवर्त्येत्यं बुद्ध० 2 A येन्ये विजानी इमु वरु

3 A & B धर्मे निखिलित ; C ०ण खेलित संप्रतिष्ठे ; Tib. 108b, l. 2-3:

དེ་དག་མཚུངས་པ་མེད་པའི་བྱང་ཆུབ་མཆོག་ཐོབ་ནས །

སངས་རྒྱས་ཞིང་དུ་མཚུངས་མེད་འཁོར་ལོ་རབ་ཏུ་སྐོར །

དེ་ཚེ་ཆོས་ཀྱི་འཁོར་ལོ་འདི་ནི་སུས་ཤེས་པ །

དེ་དག་མ་ལུས་མི་སྐྱེའི་ཆོས་ལ་གནས་པར་འགྱུར །

4 A सर्वतु च ; B सततन्तु

5 Tib. 180b, l. 4: དེ་དག་སེམས་ཅན་མིག་ནི་རབ་རིབ་མེད་པར་བྱེད།

6 B बहुव ; C बहु 7 A कोटिरनेकाः ; B ०टीरनेकाः

8 A भोति तत्र ; B ये कुशलमूले तत्र भोन्ती

ते अपि प्रतिलभन्ते[1] उत्तमं बोधिचित्तं

यद जिनु अनुशासी बोधिसत्त्वं[2] महात्मा ॥२०५॥

ये बोधिसत्त्वाः प्रमुदित मैत्रचित्ता[3]

निरुपलेपा अमि तद [बुद्ध] भोन्ती ।

यत्र स्थिहन्ती[4] इमि तद बोधिसत्त्वाः

सत्त्वानमर्थं अपरिमितं करोन्ति[5] ॥२०६॥

रक्षन्ति शीलं असदृशु ब्रह्मचर्यं

भावी समाधी विपुलमनन्तकल्पान्[6] ।

ध्याने विमोक्षे सुनिश्चित नित्यकालं

ते बोधिसत्त्वा भवि सद[7] बुद्धपुत्राः[8] ॥२०७॥

ते ऋद्धिपादान्[9] सततु निषेवमाणा

क्षेत्राणि गत्वा बहु विविधाननन्तान् ।

1 A ये पि प्रतिलभन्ति ; B ०न्ती

2 A जिनुशासी बोधिसत्त्व , C यद जिनुत्ननुशातीनुसासी बोधिसत्त्वो; Tib. omits stanza 205.

3 C अशून्यचेत्ता प्रमुदित भोन्ति नित्यं

4 A स्थिहन्ति ; C स्थितही

5 Tib. 180b, l. 4-5:

བྱང་ཆུབ་སེམས་དཔའ་གང་དག་རབ་དགའ་བྱམས་པའི་སེམས། །

གོས་པ་མེདཔ་དེ་དག་དེ་ཚེ་སངས་རྒྱས་འགྱུར། །

དེ་ཚེ་བྱང་ཆུབ་སེམས་དཔའ་དེ་དག་གར་གནས་པ། །

སེམས་ཅན་དག་གི་དོན་ཀྱང་ཚད་མེད་བྱེད་པར་འགྱུར། །

6 A कल्पम्

7 C ०त्वा भोन्ति च

8 Tib. 180b, l. 6:

དེ་ཚེ་བྱང་ཆུབ་སེམས་དཔའ་དེ་དག་སངས་རྒྱས་སྲས། །

9 B & C रिद्धिपादा

शृण्वन्ति[1] धर्मं सुगतवर-प्रभाषं[2]

सर्वं च गृह्णी प्रतिष्ठितु धारणीये ॥२०८॥

प्रभाषि [3]सूत्रानपरिमितानन्तान्

ये धारणीये प्रतिष्ठितु बोधिसत्त्वाः ।

सत्त्वान अर्थं अपरिमितं करोन्ति

ये धारणीये प्रतिष्ठितु[4] बोधिसत्त्वाः ॥२०९॥

च्युतोपपादं जानाति सत्त्वानामागतिं गतिम्[5] ।

यादृशं तैः कृतं कर्म विपाकोऽपि च तादृशः[6] ॥२१०॥

कर्मणो न च[7] संक्रान्तिरणुमात्रापि लभ्यते ।

तेऽपि तेषां विजानन्ति[8] बोधिसत्त्वा महायशाः ॥२११॥

शून्यता च महात्मानां विहारो भोति उत्तमः ।

[स्थापयन्ति महायाने] सत्त्वकोटी[9]रचिन्तियाः ॥२१२॥

न[10] चैषामो[व]दन्तानां सत्त्वसंज्ञा प्रवर्तते ।

अप्रवृत्तिं च धर्माणां बोधिसत्त्वाः प्रकाशयी ॥२१३॥

न प्रकाशयतां धर्माणु[पलम्भः प्रवर्तते] ।

शून्या[11]विहारिणो भोन्ति दृढज्ञाने[12] प्रतिष्ठिताः ॥२१४॥

1 C श्रुण्वन्ति
2 A वनप्र० ; B ०वरप्रभाषं ; C प्रशान्तं
3 C सूत्राण्य०
4 B ये प्रस्थिता तिष्ठतु
5 B ०गतं
6 B तल्लक्षणाः ; Tib. 181a, l. 3: རྣམ་པར་སྨིན་པ་དེ་འདྲར་འགྱུར །
7 B कर्मणा न
8 A प्रजानन्ति ; B तं पि तेषां प्रजा०
9 A & B ०कोटि० ; C चोदयं सत्त्वको०
10 C न तेषामो०
11 C शून्यता०
12 B दृढ़ं ज्ञाने

उद्दिश्येमं समाधिं च[1] विहारं सर्वशास्तुनाम् ।
न तेषां वर्तते[2] संज्ञा इस्त्रिसंज्ञा[स्वभावता][3] ॥२१५॥
[इस्त्रिसंज्ञां] विभावित्वा[4] बोधिमण्डे निषीदति[5] ।
बोधिमण्डे निषीदित्वा मारसंज्ञा निवर्तते[6] ॥२१६॥
न चात्र[7] पश्यते मारं मारसैन्यं च पण्डितः ।
न च पश्यति[8] मारस्य तिस्रो दुहितरोऽपि सः ॥२१७॥
बोधिमण्डे निषण्णस्य सर्वसंज्ञा प्रहीयते ।
सर्वसंज्ञाप्रहीणस्य सर्वा कम्पति मेदिनी ॥२१८॥
सुमेरवः समुद्राश्च याव सन्ति दशा दिशे[9] ।
तं च सत्त्वा विजानन्ति सर्वदिक्षु दशास्वपि ॥२१९॥
बोधिसत्त्वस्य ऋद्धेयं मेदिनी संप्रकम्पिता ।
षड्विकारं तदा काले बुध्यतो बोधिमुत्तमाम् ॥२२०॥
यावन्तः संस्कृता[10] धर्मा ये च धर्मा असंस्कृताः ।
सर्वांस्तान् बुध्यते [धर्मान्] धर्मशब्देन देशितान् ॥२२१॥

1 A हि ; B उद्दिसेम समाधिं हि
2 B वर्द्धते
3 A ०संज्ञा विभाविता ; Tib. 181a, l. 7:
བུད་མེད་འདུ་ཤེས་རང་བཞིན་གྱིས །
4 A & C प्रभा०
5 A drops this line
6 A मारसंज्ञा विवर्द्धते ; B विवर्त्तते ; C परसंज्ञा
7 A & B नचासौ
8 A न पश्यन्ति हि
9 B & C यावन्तोस्ति दशादिशी
10 B संस्कारा

न चात्र बुध्यते कश्चित् सिंहनादश्च वर्तते[1] ।
वर्तनीयं[2] विजानित्वा भोति बुद्धः प्रभाकरः[3] ॥२२२॥
प्रतीत्य धर्मा वर्तन्ते उत्पद्यन्ते प्रतीत्य च[4] ।
प्रतीत्यतां यद्धर्माणां[5] सर्वे जानन्ति ते विदुः ॥२२३॥
विधिज्ञाः सर्वधर्मेषु शून्यतायां[6] गतिंगताः ।
गतिं च ते प्रजानन्ति सर्वधर्मगतिंगताः ॥२२४॥
गतिमेतां गवेषित्वा बोधिसत्त्वो न लभ्यते ।
येनैषा सर्वबुद्धानां ज्ञाता गतिरचिन्तिया[7] ॥२२५॥
स तां[8] गतिंगतो भोति यः सर्वां गति जानति ।
सर्वस्य[9] माया उच्छिन्ना ज्ञात्वा सद्धर्मलक्षणम्[10] ॥२२६॥

1 C पर्वते

2 B वर्त्ततीश्च

3 Tib. 181b, l. 5-6:
འདི་ལ་རྟོགས་བྱེད་གང་ཡང་མེད། སེང་གེའི་སྒྲ་ནི་འབྱུང་མོད་ཀྱི།
འབྱུང་བ་དག་ཀྱང་རྣམ་རིག་ནས། འོད་བྱེད་སངས་རྒྱས་ཉིད་དུ་འགྱུར།

4 A त्या ; B ०द्यन्ते च प्रतीत्य च ; Tib. 181b, l. 7:
ཆོས་རྣམས་ཀྱི་རྟེན་པ་ཡང་། མཁས་པ་དེ་དག་ཐམས་ཅད་ཤེས།

5 A यद्धर्माणां च्चणं शून्यं

6 B C & ०ताया०

7 Tib. 182a, l. 1:
འདི་ལྟར་སངས་རྒྱས་ཐམས་ཅད་ཀྱི།
འགྲོ་བ་བསམ་ཡས་དེ་ཡིས་རིག།

8 A गतां ; B ततां

9 B सर्वैप्य

10 A & B add सद्धर्मलक्षणं ज्ञात्वा सर्वक्षेत्रान् विलोकयि ।
सर्वक्षेत्रान् विलोकित्वा बोधिमण्डे निषीदति ॥

बोधिमण्डे निषीदित्वा सिंहनादं नदी तथा ।
विज्ञापयी क्षेत्रकोटीरप्रमेया अचिन्तियाः ॥२२७॥
तांश्च प्रकम्पयी सर्वा[1] बुद्धवीरा महायशाः ।
यथ वैनयिकान् सत्त्वान् विनेती[2] सत्त्वसारथिः ॥२२८॥
स्पृशित्वा उत्तमां [बोधिं] बोधिमण्डात्तु उत्थितः[3] ।
विनेयान् विनयेत्[4] सत्त्वानप्रमेयानचिन्तियान् ॥२२९॥
ततो निर्मिणि संबुद्धो[5] अनन्तान् बुद्धनिर्मितान् ।
क्षेत्रकोटीसहस्राणि गच्छन्ती[6] धर्मदेशकाः[7] ॥२३०॥
स्थापयन्त्यग्रबोधीये सत्त्वकोटीरचिन्तियाः ।
देशयन्त्युत्तमं[8] धर्मं हितार्थं सर्वप्राणिनाम् ॥२३१॥
ईदृशं तन्महाज्ञानं[9] बुद्धज्ञानमचिन्तियम्[10] ।
तस्माज्जनयथ च्छन्दं[11] बोधिच्छन्दमनुत्तरम् ॥२३२॥
जनेथ गौरवं बुद्धे धर्मे संघे गुणोत्तमे[12] ।
बोधिसत्त्वान शूराणां बोधिमग्रां निषेवताम्[13] ॥२३३॥
अनोलीनेन चित्तेन सत्करोथ अतन्द्रिताः[14] ।
भविष्यथ ततो बुद्धा न चिरेण प्रभाकराः ॥२३४॥

1 A & B च्चेत्रान्
2 A & B यथा वैनायिकान् सत्त्वान् विनेति ; C नैरयिकान् सत्त्वान् वि०
3 B बोधिं स बोधिमराड तु उत्थितः
4 B ०न् विनयी
5 B ०बुद्धा
6 A ०न्ति
7 B ०का
8 B ०यं ह्युत्तमं
9 A ०यानं
10 B drops this line.
11 B तस्मात्तजनयथच्छन्दं
12 B बुद्धधर्मसंघे गणो०
13 A ०मग्रां गवेषतां ; B ०माग्रयां गवेषतां
14 B सकथ अतन्द्रिता

ये च क्षेत्रसहस्रेषु बोधिसत्त्वा इहागताः ।
पश्यन्ति लोकप्रद्योतं धर्मं देशेन्तमुत्तमम् ॥२३५॥
ओकिरन्ति[1] महावीरा[2] महारत्नेहि नायकम् ।
मान्दारवेहि पुष्पेहि ओकिरी[3] बोधिकारणात् ॥२३६॥
अलंकरोन्तिदं क्षेत्रं बुद्धक्षेत्रमनुत्तरम् ।
रत्नजालेन च्छादेन्ति [समन्तेन] दिशो दश ॥२३७॥
पताका [अवसक्ताश्च] उच्छ्रिता ध्वजकोटयः[4] ।
अलङ्कारैरनन्तैश्च इदं [5]क्षेत्रमलंकृतम् ॥२३८॥
कूटागारांश्च मापेन्ति सर्वरत्नविचित्रितान् ।
प्रासादहर्म्यनिर्यूहानसंख्येयान् मनोरमान् ॥२३९॥
विमानान्यर्धचन्द्रांश्च[6] गवाक्षान् पञ्जरांस्तथा ।
धूपिता ध्वजघटिका नानारत्नविचित्रिताः ॥२४०॥
धूप्यमानेन गन्धेन अभ्रकूटसमं स्फुटम्[7] ।
क्षेत्रकोटीसहस्रेषु वाति[8] गन्धो मनोरमः ॥२४१॥
ते च सर्वे स्फुरित्वान गन्धवर्षं प्रवर्षिषुः[9] ।
ये च घ्रायन्ति तं गन्धं ते बुद्धा भोन्ति नायकाः ॥२४२॥

1 C उकि० 2 ०वीरं 3 A किरन्ति

4 B अवसक्ताथ उच्छ्रिता ध्वजाकोटियः ; C ०कोटियः

5 A सूत्र० ; B इदं सूत्रमकृतः

6 B ०न्यरचन्द्रांश्च ; C ०थचन्द्राश्च ; Tib. 183a, l. 1 :

གཞལ་མེད་ཁང་དང་ཟླ་གམ་དང་ །

7 A०नेम धुपेन बूद्धक्षेत्रमिदं स्फुटं ; B प्रासादाहर्म्यधूप्यमानेन बुद्धक्षेत्रमिदं स्फूटं

8 B वारि

9 A & B ०तृष्णा ; Tib. 183a, l. 2-3 :

དེ་དག་ཀུན་ཏུ་ཁྱབ་བྱས་ནས ། སྤོས་ཀྱི་ཆར་ཡང་རབ་ཏུ་འབབས །

रागशल्यं प्रहीणैषां दोषशल्यं न विद्यते[1] ।
विध्वंसित मोहजालं तमः सर्वं[2] विगच्छति ॥२४३॥
ऋद्धिं च तत्र स्पर्शेन्ति बलबोध्यङ्ग-इन्द्रियान् ।
ध्यान[वि]मोक्षान् स्पर्शेन्ति भोन्ति चो दक्षिणार्हाः[3] ॥२४४॥
पञ्च कोटीय प्रज्ञप्ता[4] वस्त्रकोटीभि संस्तृता[5] ।
संच्छन्ना रत्नजालेहि च्छत्रकोटीभि चित्रिताः[6] ॥२४५॥
निषण्णास्तेत्र ते शूरा बोधिसत्त्वाः समागताः[7] ।
लक्षणैस्ते विरोचन्ते तथानुव्यञ्जनैरपि ॥२४६॥
वृक्षै रत्नमयैः[8] सर्वं बुद्धक्षेत्रमलंकृतम्[9] ।
निर्मिताः पुष्करिण्यश्च अष्टाङ्गजलपूरिताः ॥२४७॥
पानीयं ते ततः पीत्वा पुष्करिणी[तटे] स्थिताः[10] ।
सर्वे तृष्णां विनोदित्वा भोन्ति लोकस्य चेतियाः ॥२४८॥
अन्योन्येषु च क्षेत्रेषु बोधिसत्त्वाः समागताः ।
बुद्धस्य वर्णं भाषन्ते शाक्यसिंहस्य तायिनः[11] ॥२४९॥
शृण्वन्ति ये च तं वर्णं[12] ते भोन्ती लोकनायकाः ।
[अचिन्त्या] अनुशंसा मे इह[13] सूत्रे प्रकाशिताः ॥२५०॥

1 B प्रवर्षेषु
2 A महाजालं तामसत्वं
3 A भवन्ति चो द० ; B संपर्शेन्ति चो द०
4 A & B आसमानां मनोरमाः
5 A संभूता वस्त्रकोटीहि रत्नजालेहि ; B संस्तृता वस्त्रकोटीति रत्नजालेहि चि० ; C दुष्टकोटीति संवृता
6 C छत्रकोटी विचिचित्रिता
7 A & B महायशाः
8 A & B रत्नवृक्षैरिदं
9 B बुद्धसर्वमलङ्कतम्
10 B तट पुष्करिणीस्थिताः
11 B शाक्यसिंहतायिनं
12 A शब्दं ; B तां शब्दं
13 A ०स्ते इह ; B इद सूत्रे

स्वर्णमयेहि पत्रेहि पद्मकोट्यो [1]अचिन्तियाः ।
शुद्धस्योरगसारस्य कर्णिकास्तत्र निर्मिताः ॥२५१॥
वैडूर्यस्य च दण्डानि स्फटिकस्य च पञ्जराः ।
केसरा [2]गिरिगर्भस्य मापितास्तत्र[3] शोभनाः[4] ॥२५२॥
ये च घ्रायन्ति[5] तं गन्धं निश्चरन्तं मनोरमम् ।
तेषां सर्वे[6] प्रशाम्यन्ति व्याधयः प्रीतचेतसाम् ॥२५३॥
रागो द्वेषश्च मोहश्च अशेषास्तेहि क्षीयते ।
त्रीन् दोषान् क्षपयित्वा च[7] भोन्ति बुद्धाः सुखन्ददाः ॥२५४॥
शब्दस्ततो निश्चरति[8] बुद्धशब्दो ह्यचिन्तियः[9] ।
सद्धर्मसंघशब्दश्च[10] विनिश्चरति सर्वतः[11] ॥२५५॥
शून्यता-अनिमित्तस्य स्वरोऽप्रणिहितस्य[12] च ।
श्रुत्वा तं सत्त्वकोटीयो भोन्ति वैवर्तिका बहु[13] ॥२५६॥
निश्चरंश्चैव शब्दोऽसौ क्षेत्रकोटीषु गच्छति[14] ।
स्थापेन्ति बुद्धज्ञानस्मिन्[15] सत्त्वकोटीरचिन्तियाः ॥२५७॥

1 A ह्यचि०
2 A केशरान् गिरि० ; B ०रा सिरि०
3 B मातापितांस्तत्र
4 A & B add तेषु चाचिन्तियो गन्धो अविच्छेदेन निश्चरी । आपूरयेत क्षेत्रकोटीयो पद्मगन्धो अचिन्तियैः ॥
5 A प्रायान्ति
6 A शाम्ये ; B सर्वं
7 A ते
8 A & B ततो निश्चरती शब्दो
9 A & B ०ब्दो अचिन्तियः
10 B सद्मसंघश्च
11 A & B सर्वशः
12 B आमिमित्तस्यसरो अप्र०
13 भोन्त वैवर्तिका ; Tib. 184a, l. 1 : ཕྱིར་མི་ལྡོག་པར་རབ་ཏུ་འགྱུར །
14 A गच्छंति
15 A ०नेस्मिन्

शकुन्ता[1] कलविंकाश्च जीवंजीवक पक्षिणः ।
तेऽपि प्रव्याहरी शब्दं बुद्धशब्दमनुत्तरम्[2] ॥२५८॥
रत्नामयाश्च[3] ते वृक्षा इह क्षेत्रस्मि निर्मिताः ।
विशिष्टा दर्शनीयाश्च मणिवृक्षा मनोरमाः ॥२५९॥
लम्बन्ते तेषु वृक्षेषु सर्वाभरणवेणयः[4] ।
अनुभावेन बुद्धस्य इह क्षेत्रस्मि निर्मिताः ॥२६०॥
न सोऽस्ति[5] केषुचिद् व्यूहः सर्वक्षेत्रेषु सर्वशः ।
यो नेह दृश्यते क्षेत्रे तद्विशिष्टतमस्तदा ॥२६१ ॥
पेयालमेतदाख्यातं शाक्यसिंहेन तायिना ।
न ते ज्ञानेऽत्र काङ्क्षन्ति[6] बोधिसत्त्वा महायशाः[7] ॥२६२॥

1 A & B मयूराः

2 A & B & Tib. 184 add

कुणालाः शारिकाः क्रौञ्चाः परपुष्टाश्च पक्षिणः ।
तेऽपि प्रव्याहरि शब्दं धर्मशब्दमनुत्तरं ॥
कारन्डवाः शुका हंसाश्चक्रवाकाश्च सारसाः ।
तेऽपि प्रव्याहरि शब्दं संघशब्दमनुत्तरं ॥
यावन्तः शकुनाः केचिद् ये दिव्या ये च मानवाः ।
रत्नत्रयस्य वर्णानि व्याहरन्ति समन्ततः ॥

3 A & B रत्न०

4 A सर्वाभरणुवेणयः ; B लम्बते तेषु वृक्षेषु सर्वाभरणवेणियो ; C सत्त्वाभरणवेणिय

5 A स नास्ति

6 B त्वन्ति

7 Tib. 184b, l. 1 :

གོང་མ་བཞིན་དུ་འདི་དག་རྣམས། ཤཱཀྱ་སེང་གེ་སྐྱོབ་པས་བཤད།
བྱང་ཆུབ་སེམས་དཔའ་གྲགས་ཆེན་རྣམས། ཡེ་ཤེས་དེ་ལ་ནེམ་ནུར་མེད།

कोटीय एतां बुध्यन्ति गतिस्तेषामचिन्तिया।
ज्ञानेन ते विवर्धन्ते सागरे[1] वा स्रवन्तिभिः ॥२६३॥
न तेषां लभ्यतेऽन्तो हि[2] पिबतो वा महादधेः।
आख्यातो बोधिसत्त्वानां नयो ह्येष[3] अचिन्तियः ॥२६४॥
इह कोट्यां[4] स्थिताः शूरा बोधिसत्त्वा यशस्विनः।
स्वराङ्गानि प्रमुञ्चन्ति यथा गङ्गाय बालिकाः[5] ॥२६५॥
ततश्चिन्त्यः स्वरो[6]प्येवं बोधिसत्त्वो न मन्यते।
मन्यनायां प्रहीणायामासन्नो भोति बोधये ॥२६६॥
न स शीलं विलुं[पे]ति अपि जीवितकारणात्।
अविलुप्तः [स] चरति बोधिसत्त्वो [7]दृढव्रतः ॥२६७॥
नासौ भूयो विलुप्येत[8] कामसंज्ञाय सर्वशः।
सर्वसंज्ञाप्रहीणस्य अप्रमेयाः समाधयः ॥२६८॥

1 B सागरो ; Tib. 184b, l. 2 :
གང་གི་མཐའ་འདི་རྟོགས་པ་ན། དེ་དག་འཛུག་པ་བསམ་ཡས་ཏེ།
ཡེ་ཤེས་ཀྱིས་ནི་རྣམ་པར་འཕེལ། འབབ་ཆུ་དག་གིས་རྒྱ་མཚོ་བཞིན།

2 A ०पि

3 B नयौ षह्य ; C नष्टौ ह्येषु

4 B कोट्य' ; Tib. 184b, l. 3 :
དཔའ་བོ་མཐའ་འདིར་གནས་པ་ཡི།

5 A ०लुकाः

6 B ०चिन्त्यस्तरो० ; Tib. 184b, l. 4 :
དེ་བས་དབྱངས་ཀྱང་བསམ་ཡས་ཏེ།
བྱང་ཆུབ་སེམས་དཔའ་རློམ་སེམས་མེད།

7 A दृढ'

8 A नासौ विलुप्यते भूयः ; B नासौ विलुप्यते भूय्ये

समाहितः स चरति सज्जते न समाधिषु ।
असक्तश्चाप्रमत्तश्च नासौ लोकेषु सज्जते ॥२६९॥
लोकधातूनतिक्रम्य स गच्छति सुखावतीम्[1] ।
गतश्च[2] तत्र संबुद्धममिताभं[3] स पश्यति ॥२७०॥
बोधिसत्त्वाश्च ये शूरा लक्षणैः समलङ्कृताः[4] ।
पञ्चाभिज्ञापारमिं च प्राप्ता धारणिगोचराः[5] ॥२७१॥
गच्छन्ति क्षेत्रकोटीयो बुद्धानां पादवन्दकाः ।
ओभाषयन्तो गच्छन्ति बुद्धक्षेत्रानचिन्तियान्[6] ॥२७२॥
सर्वदोषप्रहीणाश्च[7] सर्वक्लेशविशोधिताः[8] ।
सर्वक्लेशसमुच्छिन्ना एकजातिस्थिता जिनाः ॥२७३॥
न चो अपायान् गच्छन्ति[9] तस्मात् क्षेत्रात्तु ते नराः ।
सर्वेऽपायाः समुच्छिन्नास्तस्मिन् क्षेत्रे अशेषतः ॥२७४॥
बोधिता बुद्धश्रेष्ठेन[10] अमिताभेन तायिना ।
करोथ मा तत्र काङ्क्षां[11] गमिष्यथ सुखावतीम् ॥२७५॥

1 C सुखावतिम्
2 A ततश्च, B गतश्च
3 B ०द्धममिभ'
4 C बोधिसत्त्वांश्च तान् सर्वांल्लक्षणैः समलङ्कृतान्
5 A ०भिज्ञा महाभिज्ञा धारणीगोचरा हि ये ; B ०भिज्ञा महाप्रज्ञा धारणी गोचरा हि ये
6 B ओभासयन्ता गच्छन्ति बुद्धक्षेत्रानचिन्तियाः
7 A ०हीणांश्च
8 A ०शोधकाः
9 A नचापायान् प्रग० ; B न चोपाया गच्छन्ति
10 A & B शोधिता लोकनाथेन
11 C ०थ तत्र मा कांक्षां ; B करोथ तत्र तत्र कामांक्षां

यः क्षेत्रश्रेष्ठस्य श्रुणित्व[1] वर्णं
चित्त[प्रसादं] प्रतिलभि मातृग्रामः ।
स क्षिप्र भोती पुरुषवरः सुविद्वान्
ऋद्धया च याति क्षेत्रसहस्रकोटीः ॥२७६॥

यावन्ति[2] पूजा बहुविध अप्रमेया
या क्षेत्रकोटीनयुतय-विवरेषु[3] ।
तां पूज कृत्व पुरुषवरेषु नित्यं
संख्याकलापी न भवति मैत्रचित्तः[4] ॥२७७॥

शीलं समाधिं सततु[5] निषेवमाणो
ध्यानान् विमोक्षांस्तथपि च अप्रमाणान् ।
शून्यानिमित्तान् सततु निषेवमाणो
न चिरेण सो हि सुगतु भवति लोके[6] ॥२७८॥

एषा हि पूज परमा विशिष्ट मह्यं
यः शीलस्कन्धे प्रतिष्ठितु बोधिसत्त्वो ।
सद [7]सर्वबुद्धास्तेन सुपूजिता हि
क्षयान्तकाले यः[8] स्थितु बोधिचित्ते ॥२७९॥

1 A यः सूत्ररत्नस्मिह श्रुत्व ; B सूत्ररत्न स्मिंह श्रुत्व ; C श्रुणित्वेन 2 B यावन्त
3 A & B ०या क्षेत्रकोटीनियुत च विंवरेषु ; C सिंपरेषु 4 B ०चित्तैः
5 A & C समाधि सतत 6 B सोही सुगतु भवन्तिते
7 B सद बुद्धबुद्धा० 8 A & B क्षयि अन्तकाले यः

सुपरीन्दितास्ते[1] बुद्धसहस्रकोट्यो[2]
ये बोधिसत्त्वा इमु क्षयि कालि घोरे ।
रक्षन्ति धर्मं सुगतवरोपदिष्टं[3]
ते मह्य [4]पुत्राश्चरिमक धर्मपालाः ॥२८०॥

[इति श्रीसमाधिराजे सूत्रधारणानुशंसापरिवर्तो
नाम द्वात्रिंशतितमः] ॥३२॥

1 A सुपरो० ; B सुपरीन्ददा० 2 A & B ०कोटिभिर्०
3 A सुगतरोपदि॰ ; B धर्मसुगतवर प्रभाषते ; C सुगतोपदिष्टं
4 B मह्य पुत्रा ; C पुना०